


धावन् खेलने
गायन् ह्लादने....

# हर्षस्य वर्धने
# अस्त्येव हस्ते फन्बैट ।




काम्को प्रदत्त फन्बैट ।

क्रीम्पूरित स्वादिष्ट चाकलेट
अन्तस्थो चटचटायमान वेफर
तदावृत्य मधुरतम चाकलेट ।

अधिकाधिकं कोलाहल प्रोत्साहाय च ।

काम्को लिमिटेड, मङ्गलूर ।

भारतस्य अतिविस्तृत, अतिनवीन।कार्मिकस्थानस्य प्रदानम् ।

Other Campco chocolates: Milk / White / Treat / TURBO / eclairs / mega bite / Playtime / RUBIES / TOFFEE / Campco beverages: WINNER / COCOA

R K SWAMY/CL/7804/SN

# In a class of its own

## *Exclusive pencils for one and all,*

**LION PREMIER® HB PENCILS**

Sleek, Elegant, meant for executives and others, who like style A consistent dark tone for effortless writing - micronized lead for unbreakable points are what adds to its superiority.



**LION PINKY® PENCILS**

Lion 'PINKY' Pencils Pretty Perfect, Ideal for children because of its pretty designs & colours. Strongly bonded lead for unbreakable points and super smooth writing add to its attraction.



**LION Geematic® DRAWING PENCILS**

Lion Geematic Drawing Pencils. A unit for all Professionals like artists, architects, designers & engineers. Give expertise an edge. Available in 14 grades from H to 6H and B to 6B HB and F



**LION PENCILS LTD**
95, Parijat, Marine Drive
BOMBAY 400 002

"मेरि" गोल्ड कवरिंग गहने अपनी श्रेष्ठता, अनुपम 'लाजवाब' मनमोहक डिसैनों से दुनियाँ की सारी स्त्रियों के दिलों में शाश्वत जगह पाये हैं । आपको कैसा नम्बर चाहिये यह हमें लिखकर बताइये । वि.पि.पि. द्वारा भेजा जायेगा । मुफ्त केटलाग के लिये आज ही हमें लिखिये, ।




# MERI GOLD COVERING WORKS

P.O.BOX 1405, 14, RANGANATHAN STREET
T.NAGAR, MADRAS - 600 017, PHONE: 444671


MAGGI CLUBBERS FUN LOVERS
MAGGI CLUB
लॉज़ ऑफ़ दि जंगल गेम
स्नैप सफ़ारी गेम
मैगी क्लब:आओ मनाएं जंगल में मंगल!
अपने उपहार मुफ़्त लो!
मैगी नूडल्स के 5 खाली रैपरों के आगे वाले हिस्से से यह चिन्ह काटो और अपनी पसंद के मुफ़्त उपहार पाने के लिए हमें भेज दो. 6 से 8 हफ़्तों में तुम्हें मैगी क्लब की ओर से एक रोचक व आकर्षक उपहार मिल जाएगा.
यह मत भूलो :
अगर तुम मैगी क्लब के सदस्य नहीं हो तो हमें लिखते समय अपने मनचाहे उपहार के नाम के साथ अपना नाम और पता ज़रूर लिखना. और यदि तुम पहले से मैगी क्लब के सदस्य हो तो अपना मेम्बरशिप नम्बर भी साथ भेजना.
डिज़्नी टुडे कॉमिक
फ़ॉरेस्ट फ़ेसिज़ कैप और मास्क
जंगल स्टैन्डीज़ सेट
MAGGI 2-Minute noodles
हमारा पता है : दि मैगी क्लब
पी.ओ. नं. : 5788, नई दिल्ली-110055
और यही नहीं : अगर तुमने अभी तक 'ट्रैवल इंडिया गेम' नहीं लिया है तो आज ही लो!
HTA 6679 HIN

# ज़रा सी दूरदर्शिता, और ढेर सा प्यार...

## थोड़ी सी बचत से भी, 21 वर्ष की उम्र होने तक आपका बच्चा लखपति बन सकता है.



# यूनिट ट्रस्ट के बाल उपहार वृद्धि कोष में निवेश कीजिए.

आज आपका लाडला आपकी बाहों में खेल रहा है. सुरक्षित महसूस करने के लिए आपकी गोद ही उसके लिए काफी है. लेकिन पलक झपकते 'कल' आपके द्वार पर दस्तक देने लगेगा. उसे बाहर की दुनिया में कदम रखना पड़ेगा... ज़िंदगी की कठिन सच्चाइयों का सामना करना पड़ेगा.

तो अपने बच्चे का भविष्य संवारने के लिए आज ही क़दम क्यों न उठाए जाएं? यूनिट ट्रस्ट के बाल उपहार वृद्धि कोष में निवेश कीजिए. इस योजना के अंतर्गत एक निश्चित अवधि में थोड़ा पैसा लगाने से 21 वर्ष की उम्र होने पर आपका बच्चा लखपति हो जाएगा.

प्र. अपने बच्चे को लखपति बनाने के लिए निवेश कैसे किया जाए?
उ. अगर बच्चे के जन्म होते ही आप बाल उपहार वृद्धि कोष में निवेश करें तो आपके सामने कई विकल्प हैं. (i) आप 15 साल तक प्रतिवर्ष रु. 1,100/- का निवेश करें. (ii) आप 3 सालों तक लगातार रु. 3,200 प्रतिवर्ष निवेश कर सकते है या लगातार 6 सालों तक रु. 1,900/- प्रतिवर्ष का निवेश कर सकते हैं (iii) या आप एक बार में ही रु. 8,500/- की पूंजी लगा सकते हैं.

प्र. यदि बच्चा बड़ा हो तो?
उ. 15 वर्ष की उम्र तक के लिए अलग-अलग योजना हैं. बाल उपहार वृद्धि कोष की जानकारी पुस्तिका में दी गई तालिका से इसकी विस्तृत जानकारी हासिल की जा सकती है. जानकारी पुस्तिका के लिए हमें लिखिए.

प्र. बच्चों को ये उपहार कौन कौन दे सकता है?
उ. माता-पिता, संबंधी, मित्र, कंपनी या व्यावसायिक संस्थाएं.

प्र. निवेश की न्यूनतम राशि क्या है?
उ. रु. 500/- तथा उसके बाद रु. 100 के गुणकों में.

प्र. इस निवेश पर लाभ कितना होता है?
उ. प्रतिवर्ष 12.5% तथा हर पाँचवें वर्ष बोनस डिवीडेंड भी.

प्र. अवधि पूर्ण होने पर भी कोई सुविधा मिलती है?
उ. रकम निकालने की बजाय बच्चा इसे निकटतम मासिक आय यूनिट योजना में (मासिक आमदनी पाने के लिए) या यूनिट ट्रस्ट की अन्य योजनाओं में से किसी में भी निवेशित कर सकता है.

सी जी जी एफ़ की मुफ्त जानकारी पुस्तिका के लिए यूनिट ट्रस्ट के किसी भी कार्यालय या मुख्य प्रतिनिधि या एजेन्ट, या चुने हुए हिन्दुस्तान पेट्रोलियम पम्पों/इंडियन ऑयल पेट्रोल पम्पों से संपर्क कीजिए.
या इस कूपन को भरकर डाक द्वारा यूनिट ट्रस्ट के किसी भी कार्यालय को भेज दीजिए.

कृपया मुझे बाल उपहार वृद्धि कोष की मुफ्त जानकारी भेजिए.

नाम : ______________________

पता : ______________________

**भारतीय यूनिट ट्रस्ट**

**(सार्वजनिक क्षेत्र की वित्तीय संस्था)**

- 13 सर विट्ठलदास ठाकरसी मार्ग (न्यू मरीन लाइन्स), बंबई 400 020. फ़ोन : 2863767/6201995.
- जस्टिस बशीर अहमद सैयद बिल्डिंग, 45, सेकेंड लाइन बीच, मद्रास- 600 001. फ़ोन : 587433/580938.
- गुलाब भवन (पिछला ब्लॉक), २री मंजिल, 6, बहादुर शाह जफ़र मार्ग, नई दिल्ली- 110 002. फ़ोन : 3318638/3319786.
- 2 एंड 4 फेयराइल प्लेस, कलकत्ता- 700 001. फ़ोन : 209391, 205322.

Sista's-UTI-29/90 HIN G

# चन्दमामा

संस्थापक: – **'चक्रपाणि:'** सञ्चालक: – **'नागिरेड्डी'**

ग्रीष्मविरामस्य काल: खलु एष:? विद्यालयानां विराम: इदानीम्। अत: बालका: स्वच्छन्दं विहरन्ति। किम् उचितं, किम् अनुचितम् इति अचिन्तयन्त: सर्वत्र प्रवर्तन्ते। उत्साहशालिन: ते मौनं स्थातुं न अर्हन्ति। 'न हि कश्चित् क्षणमपि जातु तिष्ठति अकर्मकृत्' इति उक्तम् अस्ति प्राचीनै:। एवं स्थिते का कथा बालानाम्? मनोविनोदजनके विषये प्रवृत्ति: तु नितरां सहजा।

यथा क्रीडा: मनस: विनोदं शरीरस्य दार्ढ्यं च यच्छन्ति तथैव पुस्तकपठनं मनोविनोदं संस्कारं च ददाति। संस्कृते समकालिकं साहित्यम् एव विरलम्। तत्रापि बालसाहित्यं ततोऽपि विरलम्। किन्तु सौभाग्यं नाम इदानीं बालसाहित्यनिर्माणदृष्ट्या तत्र तत्र प्रयत्ना: क्रियमाणा: दृश्यन्ते। 'पत्रिकाणां भाषा सरला स्यात् येन बाला: (वयसा भाषाज्ञानेन वा) ताम् अवगन्तुं शक्नुयु:' इति विचार: बहुभि: प्रबलं प्रतिपाद्यमान: अस्ति। एतादृश्य: पत्रिका:, सरलभाषया रचितानि पुस्तकानि च बालै: यथा प्राप्येरन् तथा प्रयत्न: करणीय:। मनोरञ्जिका भाषाभ्यासस्यापि साहाय्यिका अहं तु अस्मि एव। अत: बालानां ग्रीष्मकालीन: विराम: व्यर्थं यापित: यथा न स्यात् तथा चिन्तयन्तु भवन्त:।

सम्पुट: – ७ मे – १९९० सञ्चिका – २

प्रतिकृतिमूल्यं रू. ३-०० * वार्षिकं ग्राहकशुल्कं रू. ३६-००

CHANDAMAMA PUBLICATION

रसप्रश्नाः–

# रणरङ्गे रावणप्रवेशः

(रामः लङ्कातीरं प्राप्य युद्धम् आरब्धवान्। युद्धे रामलक्ष्मणौ मूर्च्छितौ जातौ। गरुडस्य अनुग्रहेण तौ पुनः उत्थितवन्तौ। रावणः धूम्राक्षं युद्धार्थं प्रेषितवान्। धूम्राक्षः हनूमता हतः अभवत्। अनन्तरं रावणपक्षे केचन प्रमुखाः अपि हताः। ततः रावणः एव रणरङ्गम् आगतवान्। वाल्मीकिरामायणस्य एतां घटनाम् आधारीकृत्य अधः केचन प्रश्नाः सज्जीकृताः सन्ति। युक्तम् उत्तरं जानन्तु।)

I. रावणपक्षीयाः केचन प्रमुखाः रामपक्षीयैः हताः अभवन्। 'अ' भागे हन्तॄणां नामानि, 'ब' विभागे च हतानां नामानि सन्ति। हन्तृहतयोः नाम योग्येन क्रमेण योजयन्तु।

| 'अ' | 'ब' |
| --- | --- |
| (अ) आञ्जनेयेन | (अ) प्रहस्तः |
| (आ) द्विविदेन | (आ) समुन्नतः |
| (इ) अङ्गदेन | (इ) महानादः |
| (ई) दुर्मुखेण | (ई) वज्रदंष्ट्रः |
| (उ) जाम्बवता | (उ) अकम्पनः |
| (ऊ) तारेण | (ऊ) कुम्भहनुः |
| (ऋ) नीलेन | (ऋ) नरान्तकः |

II. रणरङ्गम् आगतं रावणं सम्मुखीकर्तुं यावत् लक्ष्मणः प्रस्थितः ततः पूर्वम् एव रावणं कः मुष्ट्या प्रहृतवान्?

(अ) आञ्जनेयः। (आ) अङ्गदः। (इ) नीलः।

III. कः वानरवीरः रावणस्य ध्वजाग्रे, धनुषः अग्रे, किरीटाग्रे च तिष्ठन् रावणस्य कोपं वर्धितवान्?

(अ) आञ्जनेयः। (आ) अङ्गदः। (इ) नीलः।

IV. रावणः केन अस्त्रेण तं वानरवीरं मूर्च्छितं कृतवान्?

(अ) आग्नेयास्त्रेण। (आ) सर्पास्त्रेण। (इ) शक्त्यायुधेन।

उत्तराणि–

I.– अ-उ, आ-ऋ, इ-ई, ई-आ, उ-इ, ऊ-ऊ, ऋ-अ II.–(अ). III.–(इ). IV.–(अ).

वार्ताविशेषाः—

# किं प्रचलति पूर्वयुरोपप्रदेशे?

अल्बेनिया, बल्गेरिया, जेकोस्लोवाकिया, हङ्गेरी, पोलण्ड्, रुमेनिया, युगोस्लोविया इत्यादयः देशाः पूर्वयुरोपदेशाः इत्युच्यन्ते। जर्मन् डेमाक्रटिक्-रिपब्लिक् सोवियट् रशिया इत्येतयोः कश्चन भागः अपि पूर्वोक्तायां पट्टिकायां प्रविशति।

द्वितीयजागतिकयुद्धस्य सन्दर्भे जर्मनी-नेतुः हिट्लरस्य नायकत्वेन, इटलीदेशस्य मुसलोनीवर्यस्य नायकत्वेन च सम्भूय पूर्वयुरोपदेशाः सर्वे जिताः। किन्तु अन्ते जर्मनीदेशः पराजितः अभवत्। तदा तन्मित्रराष्ट्राणि जर्मनीप्रभुत्वेन स्वाधीनीकृतान् देशान् स्वतन्त्रान् अकुर्वन्।

एते देशाः नाम्ना स्वतन्त्राः जाताः, किन्तु ते सोवियत्देशस्य कम्युनिष्ट्-व्यवस्थायाः अधीनाः जाताः, यस्याः च नायकः स्टालिन् आसीत्। ऐतषां देशानां शासकाः कम्यूनिष्ट्नायकाः एव।

युगोस्लोविया नायकः मार्षल् टिटो सोवियत् शासनं निराकुर्वन् स्टालिन्वर्यं विरुध्य व्यवहरन् स्वतन्त्रं मार्गम् अनुसृतवान्। अन्ये देशाः स्टालिन्वर्यस्य मरणस्य अनन्तरम् अपि सोवियत्देशस्य अधीनाः एव आसन्।

अत्र कारणम् अपि आसीत् एव। एतेषु देशेषु यः कोऽपि शासकं विरुध्य व्यवहरति चेत् सः निर्दयं दारुणतया मार्यते स्म। एतेषां शासकानां साहाय्यार्थं सोवियत्सेना अपि कदाचित् गच्छति स्म। शासनव्यवहारे कम्यूनिष्ट्पक्षस्य एव सर्वाधिकारः। अन्यः पक्षः शासनविषये चिन्तयितुम् अपि न अर्हति स्म। अतः जनानां मनस्सु असन्तोषः बहोः कालतः धूमायमानः आसीत्।

एतादृश्या शासनव्यवस्थया अनर्थद्वयं सम्पन्नम्। प्रजाः स्वाभिप्रायं निस्सङ्कोचं प्रकाशयितुं न अर्हन्ति इति एकम्। अपरं च कम्यूनिष्ट्पक्षस्य नाम्ना केचन शासनव्यवहारे स्वेच्छावृत्तिं प्रदर्शयन्तः दर्पेण व्यवहरन्ति स्म।

रुमेनियाशासकः निकोलाय् चुसेस्को एतस्य प्रत्यक्षम् उदाहरणम्। सः चक्रवर्ती इव महता वैभवेन व्यवहरति स्म। कोऽपि विरोधम् आचरति चेत् एषः स्वस्य अधिकारबलात् तं नामावशिष्टं करोति स्म।

किन्तु गच्छता कालेन जनानां विरोधः तीव्रः जातः। गते डिसेम्बर्मासे तस्य दुःशासनस्य अन्त्यम् अभवत्, सोऽपि प्राणैः वियुक्तः अभवत्।

अन्येषु पूर्वयुरोपदेशेषु अपि इदानीम् एतादृशी एव मनःस्थितिः दृश्यते। एकस्यैव पक्षस्य यत् शासनम् अस्ति तत् निवार्य प्रजाप्रभुत्वम् उपस्थापनीयम् इति तत्रत्याः जनाः इच्छन्ति।

सोवियत्रशियादेशे यत् चिन्तन-परिवर्तनं दृष्टं तस्य फलतः एतादृशं चिन्तनम् एतेषु देशेषु आरब्धम्। सोवियत्रशियादेशेन, यत्र च मिखैल् गोर्बचेव् नायकः अस्ति, उदारा नीतिः अनुस्रियमाणा अस्ति। सामान्याः जनाः इदानीं तत्र धैर्येण व्यवहरन्तः सन्ति।

एतादृशीः घटनाः दृष्ट्वा एवं तु न निश्चेतव्यं यत् समाजवादः निरर्थकः, तेन किमपि साधयितुं न शक्यते इति। प्रपञ्चे प्रवृत्तानां घटनानां परिशीलनेन प्राज्ञैः निश्चितं यत् प्रजाप्रभुत्वद्वारा एव समाजवादः साधयितुं शक्यः इति। 'एवं करणम् एव वास्तविकं स्वातन्त्र्यम्' इति अभिप्रयन्ति ते।





# पण्डितस्य गर्वभङ्गः

नरवाहनः नाम पण्डितः पूर्वम् आसीत्। सः सर्वेषु देशेषु अटन् स्वपाण्डित्येन सर्वान् पण्डितान् पराजयन् गर्वेण व्यवहरति स्म। सः चिन्तयति स्म यत् मां पराजेतुं समर्थः पण्डितः कोऽपि जगति नास्ति इति।

एवं देशाटनं कुर्वन् सः कदाचित् सौशील्यदेशस्य राजधानीं मलयवतीनगरं प्राप्तवान्। सौशील्यदेशस्य राजा सर्वोत्तमः। सः नरवाहनस्य आगमनकारणं ज्ञात्वा अनन्तरदिने राजसभायां शास्त्रार्थचर्चायाः व्यवस्थां कृतवान्।

मलयवत्याः पण्डिताः नरवाहनस्य पुरतः बह्वीः कष्टकरीः समस्याः उपस्थापितवन्तः। किन्तु नरवाहनः तासां समस्यानाम् उत्तरं लीलया दत्तवान्। किन्तु तेन ये प्रश्नाः उपस्थापिताः तान् श्रुत्वा आस्थानपण्डिताः मौनम् आश्रितवन्तः।

सर्वोत्तमराजस्य आस्थाने स्थिताः पण्डिताः महान्तः एव इति तत्काले कीर्तिः आसीत्। तान् पराजेतुं कोऽपि न शक्नोति इत्यपि ख्यातिः आसीत्। 'एतादृशान् पण्डितान् अहं जितवान् अस्मि' इति चिन्तयन् सन्तोषम् अनुभवति नरवाहनः।

सः आसनात् उत्थाय परितः एकवारं दृष्ट्वा महाराजम् उक्तवान्– "प्रभो, भवतः आस्थानस्य पण्डिताः सर्वे पराजिताः सन्ति। भवता अभिनन्दनवचनानि वक्तव्यानि इति, मम सम्माननं करणीयम् इति वा अहं न इच्छामि। मम पाण्डित्यातिशयम् अङ्गीकुर्वन्तः भवतः आस्थानस्य पण्डिताः मम पादयोः स्पर्शं कुर्वन्ति चेत् अहं तृप्तः भवामि" इति।

एतत् अपमानकरं वचनं श्रुत्वा राजा सर्वोत्तमः चिन्ताक्रान्तः अभवत्। 'इदानीं किं

"अनामिका"



करणीयम्? किम् उत्तरं वक्तव्यम्?' इति चिन्तयन् अस्ति सः।

तावता कश्चन पुरुषः सभामध्यतः उत्थाय राजानं प्रणम्य उक्तवान्– "प्रभो! मम नाम मृदुहासः इति। भवतः अनुमतिः यदि स्यात् तर्हि अहम् एतं पण्डितं किञ्चित् प्रष्टुम् इच्छामि" इति।

राजा अङ्गीकारपूर्वकं शिरः चालितवान्। कृशकायम् उन्नतं मृदुहासं दृष्ट्वा पण्डितः नरवाहनः हसितवान्।

एतत् अविगणयन् मृदुहासः नरवाहनम् उक्तवान्– "श्रीमन्! भवान् तु महापण्डितः। मेधाविना भवता प्रश्नाः पृष्टाः चेत् अहम् उत्तरं वक्तुं निश्चयेन न शक्नोमि। अतः अहम् एव प्रश्नद्वयं पृच्छामि। भवान् समीचीनम् उत्तरं दातुं शक्नोति चेत् अहं मम पराजयम् अङ्गीकरोमि। उत्तरं दातुं न शक्तं चेत् पराजयम् अङ्गीकृत्य भवता मौनं राजसभातः निर्गन्तव्यम्" इति।

नरवाहनः मृदुहासस्य नियमम् अङ्गीकुर्वन् शिरः चालयन् उक्तवान्– "प्रश्नं पृच्छतु तावत्" इति।

"त्रयः मेषाः पादमार्गेण गच्छन्तः आसन्। तेषाम् अभिमुखम् एकः पुरुषः आगतवान्। सः पुरतः स्थितं मेषः पृष्टवान्– 'भवतः पृष्ठतः कति मेषाः सन्ति' इति। तेन मेषेण उक्तं– 'द्वौ'। किञ्चित् अग्रे गत्वा सः पुरुषः द्वितीयं मेषम् अपि पूर्वतनम् एव प्रश्नं पृष्टवान्। तदा तेनापि मेषेण उक्तं– 'द्वौ' इति। एतत् कथं वा भवितुम् अर्हति? तेन मेषेण तादृशम् उत्तरं किमर्थं दत्तम्? एषः मम प्रथमः प्रश्नः" इति उक्तवान् मृदुहासः।

एतत् श्रुत्वा उच्चैः हसन् नरवाहनः उपहासपूर्वकम् उक्तवान्– "कीदृशः प्रश्नः एषः?" इति।

"मया पूर्वम् एव उक्तं खलु– अहं कश्चन ग्रामीणः इति। ग्रामीणस्य अपि मम सामान्यस्य कस्यचित् प्रश्नस्य उत्तरं दातुम् असमर्थः कीदृशः पण्डितः भवान्?" इति उक्तवान् मृदुहासः।

नरवाहनः किञ्चित्कालं यावत् आलोच्य

उक्तवान्– "ते मेषाः प्रायः वर्तुलाकारेण गच्छन्तः आसन्। तथा चेत् एकस्य पृष्ठतः सदापि द्वौ मेषौ भवितुम् अर्हतः" इति।

तदा मृदुहासः मन्दहासपूर्वकम् उक्तवान्– "न ते वर्तुलाकारेण आसन्। ते पङ्क्तिरूपेण गच्छन्तः आसन् इति पूर्वम् एव उक्तम् आसीत् खलु मया?" इति।

पण्डितः नरवाहनः दीर्घकालं यावत् चिन्तनं कृतवान्। किन्तु किमपि उत्तरं न स्फुरितम्। अन्ते सः अनिवार्यतया उक्तवान् यत् भवान् एव उत्तरं सूचयतु इति।

"द्वितीयः मेषः मिथ्यावादी। अतः तेन असत्यम् उक्तम्। एतावत् एव एतस्य उत्तरम्" इति उक्तवान् मृदुहासः।

सभायाम् उपस्थिताः सर्वे सन्तोषेण उच्चैः हसितवन्तः। मृदुहासम् अभिमानेन दृष्टवन्तः चापि।

नरवाहनः स्वस्य आंशिकं पराजयम् अङ्गीकुर्वन् मृदुहासम् उक्तवान्– "भवदीयं द्वितीयं प्रश्नं पृच्छतु तावत्" इति।

"कश्चन पुरुषः पर्वतस्य उपरि स्थित्वा सूर्यं पश्यन् अस्ति। किञ्चित्कालस्य अनन्तरं सः पर्वतम् अवतरन् पूर्वस्यां दिशि योजनद्वयं गतवान्। ततः दक्षिणतः परिवृत्य पुनः योजनत्रयं गतवान्। ततः वामतः परिवृत्य पुनः योजनद्वयं गतवान्। एवं गत्वा सः अकस्मात् स्थितवान्। किमर्थं सः पुरुषः तथा स्थितवान्? इति मम द्वितीयःप्रश्नः"



इति उक्तवान् मृदुहासः।

पण्डितः नरवाहनः मृदुहासं कोपेन पश्यति। तथापि तेन समुचितम् उत्तरं किमपि दातव्यम् आसीत् एव। अतः सः विचिन्त्य उक्तवान्– "प्रायः तस्य पुरुषस्य पुरतः समुद्रः नदी वा स्यात्" इति।

"न, तत् कारणं न" इति उक्तवान् मृदुहासः।

अनन्तरं नरवाहनः अन्यानि पञ्चषाणि कारणानि उक्तवान्। किन्तु मृदुहासः 'एतानि उचितानि न' इति वदन् तानि निराकृतवान्। बहुधा चिन्तनेन अपि योग्यम् उत्तरं नरवाहनस्य मनसि न स्फुरितम्।

अन्ते सः आत्मनः पराजयं निश्चित्य

मृदुहासं पृष्टवान्– "भवान् एव उचितम् उत्तरं सूचयतु। सः पुरुषः किमर्थं तथा स्थितवान्?" इति।

"सः पुरुषः स्वेच्छया तथा स्थितवान्। यथा इच्छा तथा कृतवान् सः। एतावत् एव तस्य स्थितेः कारणम्" इति उक्तवान् मृदुहासः।

नरवाहनस्य मुखं म्लानं जातम्। सभासदः हर्षध्वनिम् उत्पादितवन्तः। राजा मृदुहासम् अभिमानेन दृष्टवान्।

पराजयकारणतः किङ्कर्तव्यतामूढं पण्डितं नरवाहनम् उक्तवान् मृदुहासः– "भवान् महापण्डितः स्यात् नाम, किन्तु व्यवहारचतुरः तु न। यदि कश्चित् सामान्यः मुष्टौ सिकताः गृहीत्वा पृच्छेत्– 'मुष्टौ स्थितानां सिकतानां प्रमाणं वदतु' इति, तर्हि पण्डितः कश्चित् वदेत्– 'सिकताः गणयितुं न शक्यन्ते' इति। 'मुष्टौ मुष्टिमिताः एव सिकताः सन्ति' इति वक्तव्यम् इति न स्फुरति तस्य मनसि। भवान् अपि एतादृशः एव पण्डितः" इति।

एतत् श्रुत्वा लज्जितः नरवाहनः मृदुहासं राजानं वा किमपि अवदन् मौनं ततः निर्गतवान्।

इदानीं सन्तृप्तः राजा सर्वोत्तमः मृदुहासं स्वसमीपम् आहूय– "कः भवान्?" इति पृष्टवान्।

मृदुहासः विनेयन– "प्रभो! राजधान्याः अनतिदूरे मृणालिनीनद्याः तीरे कश्चन लघुग्रामः अस्ति। वयं त्रयः सहोदराः। वयं पण्डिताः तु न। किन्तु मन्दमतयः अपि न" इति वदन् द्वारसमीपे स्थितौ सहोदरौ प्रदर्शयन्– "एतौ मम सहोदरौ। अग्रजः मन्दहासः। अनुजः विमलहासः। एतौ अपि मत्सदृशौ एव। राजास्थाने उद्योगम् इच्छन्तः वयम् अत्र अद्य आगतवन्तः आस्म" इति निवेदितवान्।

राजा सर्वोत्तमः मृदुहासस्य प्रशंसां कुर्वन् तं सत्कृतवान्। तेभ्यः त्रिभ्यः अपि सहोदरेभ्यः उचितम् उद्योगं दत्तवान् च।





# अन्यथाभावः

सवितृपुरनामके ग्रामे कृष्णकान्तः नाम कश्चन हरिकथाकारः आसीत्। हरिकथासन्दर्भे श्रीहरिः, गणपतिः, चन्द्रनाथः इति त्रयः स्ववाद्यैः तस्य साहाय्यं कुर्वन्ति स्म। कृष्णकान्तस्य हरिकथा समीपस्थेषु सर्वेषु ग्रामेषु प्रसिद्धा आसीत्।

कृष्णकान्तः एकस्याः हरिकथायाः निमित्तं सार्धैकशतं रूप्यकाणि स्वीकरोति। कदाचित् सन्तुष्टाः भक्ताः अधिकं धनं यच्छन्ति कृष्णकान्ताय। हरिकथायाः अन्ते नीराजनं भवति खलु? तत्समये अपि भक्ताः नाणकानि समर्पयन्ति। एवम् अन्यान्यैः प्रकारैः धनं प्राप्यते चेदपि कृष्णकान्तः श्रीहरिप्रभृतिभ्यः अल्पम् एव वेतनं ददाति।

कदाचित् कृष्णकान्तः कार्यनिमित्तं गृहात् निर्गतवान्। एतादृशे समये श्रीहरिप्रभृतयः तदीयं गृहम् आगतवन्तः। तत्पत्नीम् अचलाम्बाम् उक्तवन्तः च– "अम्ब! कृष्णकान्तवर्यस्य हरिकथायाः प्रशंसां जनाः यत् कुर्वन्ति तस्य कारणं कृष्णकान्तवर्यः केवलं न। वयं यत् सहकुर्मः तदपि तत्र कारणम्। किन्तु हरिकथातः यत् धनं प्राप्यते तस्य अधिकं भागं स्वयं स्थापयन् अत्यल्पं भागम् अस्मभ्यं यच्छति" इति।

तेषां वचनं श्रुत्वा अचलाम्बा सहानुभूतिपूर्वकम् उक्तवती– "भवतां कष्टम् अवगन्तुं शक्नोमि अहम्। किन्तु अप्रियं किमपि तं वदामः चेत् सः क्रुद्धः भवति। अतः किं वा कर्तुं शक्यते?" इति।

"अम्ब! वयम् अपि एतत् जानीमः एव। बहुभ्यः वर्षेभ्यः अस्माभिः साहाय्यं दीयमानम् अस्ति। इदानीं वयम् एतां वृत्तिं परित्यज्य अन्येन शारीरकश्रमेण जीवननिर्वहणं कर्तुं न अर्हामः। अतः अस्माकं वेतनं किञ्चित् वा



वर्धनीयम् एव" इति उक्तवन्तः ते त्रयः।

तदा अचलाम्बा क्षणकालम् आलोच्य उक्तवती-"अस्तु तावत्। योग्ये समये भवतां निवेदनं श्रावयिष्यामि। भवन्तः निश्चिन्ताः भवन्तु" इति।

तस्मिन् दिने सायं यदा कृष्णकान्तः प्रत्यागतः तदा अचलाम्बा पार्श्ववाद्यवादकानां निवेदनं श्रावयित्वा उक्तवती— "हरिकथातः यावत् प्राप्यते तत्र तेभ्यः न्याय्यस्य भागस्य दानम् उचितं स्यात् खलु?" इति।

एतादृशं वचनं श्रुत्वा कृष्णकान्तः नितरां क्रुद्धः। सः क्रोधेन एव पत्नीम् उक्तवान्— "किम् उचितं, किम् अनुचितं, किं करणीयं, किं न करणीयम् इति अहं सम्यक् जानामि। भवती मध्ये मा प्रविशतु" इति।

कानिचन दिनानि अतीतानि। कृष्णकान्तः योग्यं वरम् अन्विष्य स्वपुत्र्याः विवाहं सवैभवं निर्वर्तितवान्। एतदनन्तरम् पुनः अल्पे एव काले उत्तमां भूमिम् अपि क्रीतवान्। एवं स्वयं तु यथेष्टं व्ययं करोति। किन्तु पार्श्ववाद्यवादकेभ्यः श्रीहरि-गणपति-चन्द्रनाथेभ्यः वेतनं किञ्चिदपि अधिकं न ददाति। एतत् अन्याय्यं सोढुम् अशक्नुवन्तः श्रीहरिप्रभृतयः हरिकथानिमित्तं साहाय्यं निराकृतवन्तः।

साहाय्यनिराकरणस्य कारणं ज्ञातुम् इच्छन् कृष्णकान्तः सर्वप्रथमं कृष्णकान्तस्य गृहं गतवान्। तत्समये श्रीहरिः गृहे न आसीत्।

श्रीहरेः पत्नी कृष्णकान्तम् अन्तः उपवेश्य— "एषु दिनेषु भवान् अत्र न आगतः एव। मम पतिः तु हरिकथावाद्यवादने मग्नः सन् कुटुम्बचिन्ताम् एव परित्यक्तवान् अस्ति। अस्माकं पुत्री प्राप्तवयस्का अस्ति। विना विलम्बं तस्याः विवाहः निर्वर्तनीयः" इति वदन्ती स्वपरिवारस्य कष्टकरीं परिस्थितिं विस्तरेण निवेदितवती।

तत्सर्वं श्रुत्वा कृष्णकान्तः ततः गणपतेः गृहं प्राप्तवान्। गणपतेः पत्नी अस्वस्था सती शय्याम् आश्रितवती आसीत्। गणपतेः पुत्रः पञ्चदशवर्षीयः कृष्णकान्तम् आक्षेपस्वरेण

उक्तवान्– "मम पितुः अनवधानतः मम माता एवं चिरकालतः शय्याम् आश्रितवती अस्ति। योग्या चिकित्सा व्यवस्थापनीया। किन्तु तदर्थं धनं नास्ति। अस्माकम् अनुरोधस्य कारणतः अद्य पिता ऋणप्राप्त्यर्थं पार्श्वस्थं ग्रामं गतवान् अस्ति" इति।

कृष्णकान्तः कानिचन सान्त्वनवचनानि उक्त्वा ततः चन्द्रनाथस्य गृहं गतवान्। चन्द्रनाथः गृहस्य पुरतः जीर्णे कटे विषण्णवदनः सन् उपविष्टवान् आसीत्। कृष्णकान्तं दृष्ट्वा सः कोपेन उक्तवान्– "आर्थिकदुर्दशायाः कारणतः मम गृहे एतादृशी परिस्थितिः। दैनन्दिनभोजनार्थम् अपि कष्टम् अनुभवन्तः स्मः वयम्। मम पत्नीपुत्रादयः प्रतिदिनम् अपि अश्रुभिः हस्तं क्षालयन्तः सन्ति। इतः परम् अहं भवता सह ग्रामं ग्रामं गन्तुं न शक्नोमि। अहं दुर्बलः वृद्धः च। भवता सह अटनार्थं मम शरीरसामर्थ्यं नास्ति" इति।

"एवं वा?" इति वदन् कृष्णकान्तः हसितवान्। ततः स्वगृहं गतवान् च। अनन्तरदिने सः श्रीहरिं, गणपतिं, चन्द्रनाथं च स्वगृहम् आनायितवान्। ग्रामप्रमुखाः अपि तत्र उपस्थिताः आसन्। अनन्तरं तान् त्रीन् अपि उक्तवान् कृष्णकान्तः– "भवन्तः मद्विषये भवताम् अभिप्रायं निस्सङ्कोचं प्रकटयन्तु" इति।

श्रीहरिप्रभृतयः कृष्णकान्तं परमकृपणं वदन्तः कठोरैः वचनैः निन्दितवन्तः।

एतदनन्तरं कृष्णकान्तः गृहस्य अन्तः



गत्वा त्रीन् धनस्यूतान् स्वीकृत्य बहिः आगतवान्। तेषां त्रयाणां पुरतः स्थापयित्वा उक्तवान्– "भवन्तः माम् अन्यथा भावितवन्तः। वस्तुतः अहं न्यूनं वेतनं दत्तवान् इति तु सत्यम् एव। किन्तु तत्र कारणम् अस्ति। धनविषये मम यादृशी नियन्त्रणशक्तिः अस्ति तादृशी शक्तिः भवतां नास्ति। एतत् जानन् अहं वेतनस्य अर्धं भागं केवलं दत्तवान्। मया पूर्णं धनं दत्तं चेदपि भवन्तः तत् कथमपि व्ययीकृतवन्तः स्युः। अतः एव प्रतिमासम् अर्धं भागं दत्त्वा अवशिष्टम् इदानीं यच्छन् अस्मि" इति।

"भवता यत् उक्तं तत् सत्यम् एव। यावत् प्राप्तं तावतः व्ययः अस्माकं स्वभावः" इति उक्तवान् श्रीहरिः।

कृष्णकान्तः धनस्य स्यूतं तेभ्यः समर्प्य उक्तवान्– "अहम् इदानीम् एकैकस्मै अपि दशसहस्रं रूप्यकाणि दत्तवान् अस्मि। वयं सर्वे वृद्धाः सञ्जाताः स्मः। अतः अद्य आरभ्य अस्माकं विश्रान्तिजीवनं भवतु। मया इदानीं यत् धनं दत्तं तेन भवतां गृहस्य समस्याः परिहृताः भवेयुः। तथापि इतः परं कदाचित् यदि किमपि साहाय्यम् अपेक्षितं स्यात् तर्हि निस्सङ्कोचं मम समीपम् आगच्छन्तु। अहं यथाशक्ति साहाय्यं करिष्यामि" इति।

कृष्णकान्तस्य वचनं श्रुत्वा आनन्दाश्रूणि स्रावयन्तः श्रीहरिः, गणपतिः, चन्द्रनाथश्च कृष्णकान्तं साष्टाङ्गं नमस्कृतवन्तः। क्षमां प्रार्थयन्तः ते उक्तवन्तः– "श्रीमन्! अविचार्य अस्माभिः यत् व्यवहृतं तदर्थं क्षन्तव्याः वयम्" इति।

तावता तत्र उपस्थितः कश्चन वृद्धः उत्थाय उक्तवान्– "पूर्वं वेतनदाने कृपणता प्रदर्शिता कृष्णकान्तेन। किन्तु इदानीं श्रीहरिप्रभृतिभिः वार्धक्ये अमृतोपमं फलं प्राप्तम्। नितरां श्लाघनीयः कृष्णकान्तः" इति।

एतत् श्रुत्वा "आम्, आम्" इति वदन्तः तत्र उपस्थिताः सर्वे सन्तोषेण शिरः चालितवन्तः।






७

(कुतन्त्रेण सुमेधराज्यस्य सिंहासनं वशीकृतवतः वीरसिंहस्य दौष्टं प्रवृद्धम्। स्वस्य राजत्वम् अनङ्गीकुर्वन्तं वृद्धं मन्त्रिणं, शान्तिदेवपक्षपातिनं वसन्तनामकं युवकं च शूलम् आरोपयितुम् आज्ञापितवान् सः। किन्तु केनचित् अपरिचितेन वीरपुरुषेण शूलारोपणार्थं नीयमानौ तौ रक्षितौ। तदनन्तरम्......।)

वसन्तं, वृद्धं मन्त्रिणं च कोऽपि अज्ञातः वीरपुरुषः रक्षितवान् इति ज्ञातवतः वीरसिंहस्य कोपः नितरां प्रवृद्धः। कोपवशात् वीरसिंहस्य शरीरं कम्पते।

तावता दलपतेः सहायकः हस्तौ बद्ध्वा शुनकः इव विनयातिशयं प्रदर्शयन् अग्रे आगत्य— "महाप्रभो! दलपतिः भवतः सम्मुखम् आगन्तुं लज्जां भीतिं च अनुभवति" इति निवेदितवान्।

वीरसिंहः यदा सिंहासनस्य स्वायत्तीकरणार्थम् उद्युक्तः तदा एतेन दलपतिना बहुधा साहाय्यं दत्तम् आसीत्। तस्य साहाय्यं यदि न स्यात् तर्हि प्रायः वीरसिंहः सिंहासनं स्वायत्तीकर्तुं शक्तः न अभविष्यत्। अतः एव 'वीरसिंहः मां क्षाम्यति एव' इति निश्चित्य सः दलपतिः दूतरूपेण



स्वसहायकं भटं प्रेषितवान् आसीत्।

किन्तु वीरसिंहः तस्य भटस्य वचनं श्रुत्वा पूर्वापेक्षया अधिकं क्रुद्धः जातः। "धिक् तम्। कार्यसाधनम् अजानन् मूर्खः सः। तम् अद्यैव देशात् निष्कासयतु। अद्य आरभ्य भवान् एव दलनायकः। भवतः विनयेन धैर्येण च अहं सन्तुष्टः अस्मि। तं मूर्खं भीरुम् अहं द्रष्टुं न इच्छामि। मम पुरतः तस्य आगमनं मास्तु एव" इति उक्त्वा अधिकारपदकम् आनाय्य तस्य उरसि योजितवान्।

'दलपतिपदवी प्राप्येत' इति स्वप्ने अपि न चिन्तितम् आसीत् तेन भटेन। सः महता आनन्देन वीरसिंहं साष्टाङ्गं नमस्कृत्य— "महाप्रभो, भवतः निमित्तम् अहं प्राणान् अर्पयितुम् अपि सिद्धः एव" इति उत्साहेन उक्तवान्।

"मूर्ख! भवान् प्राणान् अर्पयति चेत् मम कः लाभः? प्राणान् रक्षता स्वामिकार्यं कथं साधनीयम् इति चिन्तयतु। कार्येण मां तोषयतु, न तु प्राणार्पणेन" इति उक्तवान् वीरसिंहः।

तदा भटः उत्थाय सैनिकनमस्कारं कुर्वन्— "नीतिः सम्यक् बोधिता भवता। इतः परं प्राणार्पणविषयं कदापि न उपस्थापयामि। शत्रूणां प्राणान् हरन् भवन्तं तोषयिष्यामि। तदर्थम् अनुज्ञादानेन अहम् अनुग्रहणीयः" इति उक्तवान्।

"अस्तु तावत्। यत् करणीयं तत् वचनैः न, अपि तु कार्येण प्रदर्शयतु। मम अनुज्ञा सर्वदा अस्ति एव" इति उक्तवान् वीरसिंहः।

एषः नूतनः दलपतिः द्विगुणितेन उत्साहेन वीरसिंहं पुनरपि नमस्कृत्य ततः निर्गतवान्।

'मदीयेन प्रथमेन कार्येण एव वीरसिंहं तोषयिष्यामि' इति स्वगतं वदन् दशभिः भटैः सह ततः प्रस्थितवान् सः। राजधान्याः सीमाप्रदेशे स्थितः वसन्तस्य ग्रामः प्राप्तः तैः।

वसन्तस्य वृद्धौ मातापितरौ अनुजम् अनुजां च निर्दयम् आकृष्य ग्राममध्ये स्थितं विपणिस्थलं नीतवान् एषः नूतनदलपतिः। अनन्तरं तीक्ष्णम् आयुधं प्रदर्शयन्— "वदन्तु वसन्तः कुत्र गतः? सः कुत्र गोपितः

भवद्भिः?" इति पृष्टवान्।

"वसन्तस्य वार्ता न जानीमः वयम्। राजभटैः सः नीतः। अस्मान् पृच्छति चेत् किं प्रयोजनम्?" इति भीत्या उक्तवान् वसन्तस्य पिता।

"राजभटैः सः नीतः आसीत् इति वयम् अपि जानीमः एव। किन्तु सः ततः पलायितवान्। इदानीं सः कुत्र? पूर्वतनं दलपतिम् अश्वात् पातयित्वा वसन्तं रक्षितवान् सः दुष्टः कः? सत्यं वदन्तु" इति कोपेन उक्तवान् नूतनदलपतिः।

तदा वसन्तस्य अनुजः अग्रे आगत्य उक्तवान्– "अपरिचितः पुरुषः यदा वसन्तस्य रक्षणार्थम् आगतः तदा वयं न आस्म। भवतां पुरतः सा घटना प्रवृत्ता। अतः वसन्तः कुत्र गतः इति भवन्तः एव जानीयुः" इति।

"सत्यम् एव। यदा वसन्तः नीयमानः आसीत् तदा भवन्तः सर्वे तत्रैव आसन्। अपरिचितः वीरः यदा आक्रमणं कृतवान् तदापि भवन्तं दृष्टवान् अहम्" इति तत्र उपस्थितेषु अन्यतमः युवकः उक्तवान्।

"अये, अलं मिथ्याकथनेन। माम् एव आक्षेप्तुम् उद्युक्तः वा भवान्? तावत् औद्धत्यं वा भवतः?" इति वदन् कशया तं युवकं ताडयितुम् उद्युक्तः दलपतिः।

"भोः, किमिदम्? निरपराधिनं युवकं विना कारणं किमर्थं तथा ताडयति?" इति



पृष्टवान् कश्चन ग्रामीणः।

"अहो, दुष्टानां स्वेच्छाचारः! महाराजस्य शान्तिदेवस्य काले एतादृशी एका अपि घटना न प्रवर्तते स्म" इति उक्तवान् अपरः ग्रामीणः।

"अहो, इदानीं ज्ञातं मया। एतद्ग्रामीणाः सर्वे राज्ञः वीरसिंहस्य विरोधिनः एव" इति उक्त्वा सः नूतनः दलपतिः भटान् आज्ञापितवान्– "भवन्तः गत्वा एतं ग्रामम् अग्निसात् कुर्वन्तु। चतसृषु दिक्षु अपि अग्निं ज्वालयन्तु। सर्वम् अपि दग्धं भवतु। राजविरोधस्य किं फलम् इति एते सम्यक् जानन्तु। ज्वालयन्तु अग्निम्" इति।

"अस्माभिः कः अपराधः कृतः? राज्ञः



विरोधः कदा प्रदर्शितः? अस्माकं गृहाणि मा दाहयतु भोः" इति दैन्येन प्रार्थितवन्तः ग्रामीणाः।

किन्तु भटाः ग्रामीणानां प्रार्थनां तृणाय मन्यमानाः उन्मादेन इव हसन्तः गृहाणि ज्वालितवन्तः। एतत् दृष्ट्वा जनाः हाहाकारम् आरब्धवन्तः।

ग्रामे प्रचलन्तं कोलाहलं दृष्ट्वा सन्तोषम् अनुभवन् नूतनदलपतिः विजयगर्वेण पुनः आज्ञापितवान्– "एकम् अपि गृहं यथा न शिष्येत तथा दहन्तु। सर्वं भस्मीभूतं चेदेव एते विवेकं प्राप्नुयुः" इति।

वायुना प्रेरितः अग्निः क्षणे क्षणे वर्धमानः अस्ति। उन्नताः अग्निज्वालाः दृश्यन्ते सर्वत्र। बन्धूनां, पशूनां, वस्तूनां च रक्षणार्थं जनाः इतस्ततः धावन्ति। 'एतस्य सर्वस्य कारणम् अहम् एव' इति गर्वेण विकटाट्टहासं कुर्वन् प्रशंसावचनैः भटान् प्रोत्साहयति दलपतिः। ग्रामस्य पूर्णं दाहं दृष्ट्वा तृप्तिं प्राप्य भटैः सह राजधानीं प्रतिगतवान् सः।

* * * *

घनान्धकारमयी रात्रिः। अजस्रा वृष्टिः अपि अस्ति। मेघैः आच्छन्ने आकाशे कदाचित् तडित् दृश्यते। एतादृशे काले अरण्यमार्गेण जयानन्दमुनिः एकाकी जयपुरीं गच्छन् अस्ति। कश्चन व्याघ्रशिशुः धेनुः इव तम् अनुसरति। मुनेः स्कन्धे सुन्दरी काचित् शुकी उपविष्टा अस्ति।

जयपुरी इति राज्यस्य राजधान्याश्च नाम। जयपुरी शान्तिपुरम् इव विशालं नगरं न। ग्रामसमूहः इव दृश्यमानं लघुनगरं तत्। एतस्य राजधानीनगरस्य कारणतः राज्यस्य नाम अपि जयपुरी इत्येव जातम् आसीत्। जयपुर्याः एकस्मिन् पार्श्वे सुमेधराज्यम् अस्ति। अपरस्मिन् पार्श्वे च समुद्रः अस्ति। पुनः पार्श्वद्वये सुविशालम् अरण्यम्।

पूर्वं प्रायः द्वित्रशतवर्षेभ्यः पूर्वं सामन्तेन जयपुरीराजेन सुमेधराजस्य प्राणाः रक्षिताः आसन्। तदारभ्य सुमेधराजैः जयपुरी स्वातन्त्र्येण अनुगृहीता आसीत्। जयपुर्याः उपरि आक्रमणं करणीयं चेत् सुमेधराज्यम् अतिक्रम्य एव गन्तव्यम्। अतः जयपुर्याः

शत्रुभीतिः नास्ति।

शङ्करवर्मा जयपुर्याः राजा। सः जयानन्दमुनेः प्रमुखेषु शिष्येषु अन्यतमः।

जयानन्दमुनिः जयपुर्याः सीमायां स्थितम् आलयं प्राप्य– "अये व्याघ्रमित्र! मम प्रत्यागमनपर्यन्तं भवान् अत्रैव तिष्ठतु" इति व्याघ्रम् आदिश्य शुकीम् उन्नीय– "मल्लिके, भवती गत्वा राजानं मम आगमनं निवेदयतु" इति उक्तवान्।

मुनेः भावं जानती सा शुकी पक्षौ प्रसार्य आकाशे डयमाना दुर्गम् उद्दिश्य अगच्छत्।

तस्मिन् दिने शङ्करवर्मा राजकार्याणाम् अनन्तरं भोजनं समाप्य विलम्बेन शयनमन्दिरं प्रति गच्छन् आसीत्। तावता शुकवाणी श्रुता तेन– "वत्स!" इति।

यावत् राजा परिवृत्त्य दृष्टवान् तावता शुकी मल्लिका राज्ञः स्कन्धे उपविश्य राजानं पुनः अवदत्– "वत्स!" इति।

"मल्लिके! का वार्ता? किमर्थम् आगता भवती?" इति पृष्टवान् राजा शङ्करवर्मा।

"महात्मा, महात्मा" इति द्विवारम् उच्चार्य चञ्चूम् इतस्ततः अचालयत् सा शुकी।

"एवं वा?" इति वदन् राजा तत्क्षणे एव भटान् आज्ञापितवान् यत् दुर्गद्वारम् उद्घाटनीयम् इति।

जयानन्दमुनिः शङ्करवर्माणं "वत्स" इति आह्वयति। शङ्करवर्मा च जयानन्दमुनिं 'महात्मन्' इति सम्बोधयति। एतत् शब्दद्वयम् उच्चार्य सन्देशवाहककार्यं





कृतवती आसीत् शुकी।

शङ्करवर्मा जयानन्दमुनिम् आदरेण स्वागतीकृत्य नमस्कुर्वन् उक्तवान्– "रात्रिकाले वृष्टौ एतावद्दूरं किमर्थम् आगतः भवान्? मल्लिकाद्वारा सन्देशः प्रेषितः चेत् अहम् एव आगच्छेयं खलु?" इति।

"भवतः वचनं युक्तम् एव। किन्तु भवतः आगमनं भवति चेत् तत् बहवः जानन्ति। अतः अहम् एव आगतः। संन्यासिनः मम वृष्ट्या तापेन वा विशेषक्लेशः न भवति" इति उक्तवान् जयानन्दमुनिः।

'विशिष्टं कार्यं किमपि अस्ति इत्यतः एव मुनिः स्वयम् अत्र आगतवान्' इति ज्ञातवान् शङ्करवर्मा। सः मुनिं राजभवनस्य अन्तः नीत्वा उष्णं क्षीरम् आनीय दत्तवान्। अनन्तरं मुनेः आदेशानुसारम् आसने उपविष्टवान्।

"वत्स! एषु दिनेषु भवतः मनः नितरां खिन्नम् इति ज्ञातम्। सत्यं खलु एतत्?" इति पृष्टवान् जयानन्दमुनिः।

"आं महात्मन्! भवतः दर्शनार्थं स्वयम् आगन्तव्यम् इति चिन्तयन् आसम्" इति उक्तवान् शङ्करवर्मा।

"शान्तिपुरे प्रवृत्ताभिः दुर्घटनाभिः भवतः मनःस्वास्थ्यं कलुषितम् अभवत्। एवं ननु?" इति पृष्टवान् मुनिः।

"आम्। केभ्यश्चित् शतकेभ्यः सुमेधराजवंशः निष्कण्टकम् अनुवर्तमानः आसीत्। किन्तु सा परम्परा छिन्ना अभवत्। वीरसिंहः स्वभावेन परमदुष्टः। दिने दिने तदीयः दुराचारः वर्धमानः अस्ति। अल्पे एव काले तस्य वक्रदृष्टिः अस्माकं राज्यस्य उपरि अपि पतति चेत् न तत्र आश्चर्यम्" इति खेदेन उक्तवान् शङ्करवर्मा।

"सुमेधराजवंशस्य उच्छेदः इतोऽपि न जातः वत्स" इति वदन् मुनिः स्वमुष्टिं प्रसारितवान्। तत्र पदकसहितः सुवर्णहारः आसीत्। पदके राजवंशस्य चिह्नं स्फुटं दृश्यते स्म। एतत् दृष्टवतः शङ्करवर्मणः नेत्रे सुविशाले जाते। "एषः सुमेधराज्यस्य युवराजस्य कण्ठहारः! भवता कथं प्राप्तः एषः?" इति पृष्टवान् शङ्करवर्मा।

"न केवलं हारः, हारसहितः युवराजः एव प्राप्तः मया। युवराजः इदानीं मदधीनः अस्ति" इति हसन् उक्तवान् जयानन्दमुनिः।

"महात्मन्! अत्यानन्दकरी वार्ता श्राविता भवता। इदानीं मनः निश्चिन्तं जातम्। युवराजस्य पालनपोषणभारः मया वोढव्यः इति सूचयितुम् एव खलु भवान् अत्र आगतः?" इति सन्तोषेण उत्साहेन च पृष्टवान् शङ्करवर्मा।

"युवराजस्य रक्षणे भवतः उत्साहः स्यात्। किन्तु तस्य रक्षणार्थम् उद्युक्तं चेत्, तस्य,देशस्य च अपायः न भवेत् वा?" इति पृष्टवान् जयानन्दमुनिः।

शङ्करवर्मा क्षणकालस्य मौनस्य अनन्तरम् चिन्तयुक्तेन स्वरेण उक्तवान्– "गभीरतया विचार्यमाणे, एतेन कार्येण अपायः एव इत्येव भासते। दुष्टः वीरसिंहः युवराजस्य अन्वेषणार्थं सर्वासु दिक्षु गूढचरान् प्रेषितवान् अस्ति। अतः रहस्यरूपेण अत्र युवराजस्य रक्षणं कष्टकरम् एव" इति।

"सम्यक् चिन्तितं भवता। युवराजः अरण्ये रहस्ये वर्धते चेदेव क्षेमाय। किन्तु युवराजस्य एषः हारः जागरूकतया रक्षणीयः। एतस्मिन् कार्ये भवन्तं नियोजयितुम् एव अहम् अत्र आगतः। हारः युवराजस्य कण्ठे भवति चेत् अपायस्य सम्भवः अस्ति एव" इति उक्तवान् जयानन्दमुनिः।

"भवतः आज्ञां शिरसा वहामि। एतदतिरिच्य अन्यत् किमपि करणीयम् अस्ति वा मया?" इति पृष्टवान् शङ्करवर्मा।

"आं वत्स! भवता करणीयानि कार्याणि बहूनि सन्ति। किन्तु इदानीं न, अपि तु समये प्राप्ते करणीयानि तानि। योग्यस्य समयस्य प्राप्तिपर्यन्तं निश्चिन्ततया सहनया च स्थातव्यम्। सुमेधराज्यस्य प्रजानां कष्टानि निवारयितुम् अस्माभिः यथाशक्ति प्रयतनीयम्। सदा जागरूकैः भवितव्यं च" इति उक्तवान् जयानन्दमुनिः।

–(अनुवर्तते)






# त्रीणि मित्राणि

समुद्रस्य तरङ्गाः इव वेतालमुखात् कथाः आगच्छन्ति स्म। त्रिविक्रमः अपि तीरम् इव आचरन् पुनः अपि वृक्षस्य समीपं गतवान्। वृक्षम् आरुह्य शाखायां लम्बमानं शवं स्कन्धे आरोप्य अधः आगतवान्। अनन्तरं यथापूर्वं मौनं श्मशानाभिमुखं प्रस्थितवान् च। तदा शवान्तर्गतः वेतालः अवदत् – "अये राजन्! एतस्मिन् मध्यरात्रे भवता वस्तुतः तल्पे शयनं करणीयम् आसीत्। इदानीं तु भवान् निर्जने भीतिजनके श्मशानमार्गे व्यर्थं प्रयत्नं कुर्वन् अस्ति। इदानीं भवान् यथा करोति तथा बुद्धिमान् अपि जनः कदाचित् अविवेकेन व्यवहरति। हरिणी नाम युवतिः अपि पूर्वं तथैव व्यवहृतवती। भवतः मार्गायासस्य परिहारार्थं हरिण्याः कथां श्रावयामि। श्रद्धया शृणोतु तावत्" इति।

अनन्तरं वेतालेन कथा आरब्धा –

पूर्वं दण्डकारण्ये किञ्चन गुरुकुलम्

## वेतालकथा



आसीत्। विद्यासागरः नाम पण्डितः तत् चालयति स्म। किन्तु एतस्य गुरुकुलस्य राजाश्रयः न आसीत्। अतः धनिकाः स्वपुत्रान् एतदर्थं न प्रेषयन्ति स्म। अतः विद्यासागरः महता कष्टेन गुरुकुलं चालयन् आसीत्।

हरिणी नाम कन्या एतस्मिन् गुरुकुले पठति स्म। साहित्ये तस्याः विशेषाभिरुचिः। सङ्गीतशास्त्राभ्यासी मल्लिनाथः, खड्गविद्याभ्यासी शशिधरः च तस्याः आत्मीयौ। एतेषु त्रिषु आत्मीयता दिने दिने वर्धते।

साहित्यविद्यार्थिन्याः हरिण्याः सङ्गीते अपि अभिरुचिः आसीत्। मल्लिनाथः यदा गायन् भवति तदा एषा तत्र उपविश्य आसक्त्या शृणोति। शशिधरः अपि कलाप्रियः एव। किन्तु खड्गविद्यायां महती आसक्तिः अस्तीत्यतः सः कलानैपुण्यं सम्पादयितुं न शक्तवान्।

दिनानि गतानि। हरिणी साहित्यशास्त्रनिपुणा कवयित्री च जाता। मल्लिनाथः सङ्गीतविद्वान् जातः। शशिधरः च खड्गविद्यायां प्रवीणः जातः।

कदाचित् गुरुकुलस्य प्रधानाचार्यः विद्यासागरः एतान् त्रीन् आहूय– "भवतां विद्याभ्यासः अद्य समाप्तः। अतः इतः गन्तुम् अनुज्ञा दीयते मया। अदृष्टबलानुगुणम् उत्तमं जीवनं यापयन्तु भवन्तः" इति उक्त्वा आशिषा अनुगृह्य प्रेषितवान्।

शशिधरः अश्वम् आरुह्य अरण्यमार्गेण प्रस्थितवान्। मार्गमध्ये तेन दृष्टं यत् केचन अवगुण्ठनधारिणः दुष्टाः एकाकिनः पुरुषस्य उपरि आक्रमणं कृतवन्तः सन्ति इति। सः एकाकी पुरुषः कोपात् खड्गम् आकृष्य धैर्येण अवगुण्ठनधारिणः सम्मुखीकुर्वन् आसीत्। शशिधरः तस्य साहाय्यार्थं वेगेन गतवान्। शशिधरस्य खड्गप्रावीण्यं दृष्ट्वा चकिताः अवगुण्ठनधारिणः ततः पलायितवन्तः। सः वीरः व्रणितः सन् अधः पतितः आसीत्। शशिधरः तस्य समीपं गत्वा तम् उत्थाप्य प्रथमचिकित्सां कृतवान्।

किञ्चित् उत्साहं प्राप्य सः वीरः उक्तवान्– "भोः, अहम् एतस्य देशस्य

राजा। मृगयार्थम् अरण्यम् आगतः कथमपि परिवारतः पृथग्भूतः जातः। एते अवगुण्ठनधारिणः प्रायः चोराः। भटद्वारा एतान् ग्रहीष्यामि एव। भवता समये उपस्थाय महत् साहाय्यं कृतम्। प्रशंसार्हं खड्गप्रावीण्यं भवतः" इति।

"श्रीमन्! अत्र मम किमपि नास्ति। सर्वम् अपि गुरोः अनुग्रहात् प्राप्तम्" इति विनयेन उक्तवान् शशिधरः।

"एवं वा? तावान् समर्थः वा भवतः गुरुः? अस्तु तावत्। भवान् यत् इच्छति तत् पृच्छतु, दास्यामि" इति उक्तवान् राजा।

"प्रभो! विद्याभ्यासं समाप्य गुरुकुलात् आगच्छन् अस्मि। योग्यां गुरुदक्षिणां दातुं मम सामर्थ्यं नास्ति। अतः भवान् धनेन गुरुकुलस्य साहाय्यं करोति चेत् अहं कृतज्ञः भवेयम्" इति उक्तवान् शशिधरः।

शशिधरेण सह राजधानीं गतः राजा तम् अङ्गरक्षकत्वेन नियोजितवान्। राजोद्योगिनः द्वारा विद्यासागराय प्रभूतं धनं प्रेषितवान् च।

मल्लिनाथः अपि राजधान्याम् एव निवसति। शशिधरः कदाचित् तं द्रष्टुं गतवान्। मल्लिनाथः महता कष्टेन जीवननिर्वहणं कुर्वन् आसीत्। केचन बालकाः ततः सङ्गीतं पठन्तः तु आसन्। किन्तु तेन अधिकः आयः नास्ति।

शशिधरः राज्ञः अङ्गरक्षकः इति ज्ञात्वा सन्तोषम् अनुभवन् मल्लिनाथः उक्तवान्– "मित्र! राजास्थाने भवतः वचनस्य गौरवं





भवति एव। अतः कदाचित् तत्र मम सङ्गीतगोष्ठीम् आयोजयतु।" इति।

"प्रयत्नं करिष्यामि" इति उक्त्वा ततः गतः शशिधरः राज्ञः पुरतः मल्लिनाथस्य प्रस्तावं न कृतवान् एव। किन्तु उन्नतोद्योगिनां प्रमुखाणां च पुरतः मल्लिनाथस्य पाण्डित्यं श्लाघितवान्। तदा सङ्गीतप्रियाः केचन मल्लिनाथस्य विद्यालयस्य धनसाहाय्यं कृतवन्तः। शशिधरः अपि यथाशक्ति धनं दत्तवान्।

धनिकानाम् अनुग्रहतः मल्लिनाथस्य विद्यालयेन प्रसिद्धिः प्राप्ता। विद्यालयकारणतः मल्लिनाथस्य अपि कीर्तिः सर्वत्र प्रसृता। बहवः धनिकाः मल्लिनाथद्वारा सङ्गीतगोष्ठीं कारितवन्तः। अतः मल्लिनाथस्य आयः अपि प्रवृद्धः।

यत्र यत्र मल्लिनाथस्य सङ्गीतकार्यक्रमः भवति तत्र तत्र हरिणी अपि अवश्यम् उपस्थिता भवति। शशिधरः तु यदा समयावकाशः तदा उपस्थितः भवति।

कदाचित् मल्लिनाथः हरिणीम् उक्तवान्– "एषः शशिधरः राज्ञः अङ्गरक्षकः अस्ति। राजास्थाने तस्य वचनस्य आदरः अपि भवति। तथापि सः मया प्रार्थितः अपि अद्यावधि मम सङ्गीतकार्यक्रमं राजास्थाने न आयोजितवान्। मम कीर्तिं गौरवं च दृष्ट्वा सः असूयाग्रस्तः स्यात् इति अहं भावयामि। भवती वा तम् उक्त्वा तद्द्वारा राजास्थाने मम सङ्गीतगोष्ठीम् आयोजयितुं प्रयत्नं करोतु" इति।

हरिणी शशिधरेण तदा तदा मिलति एव। एवं यदा मिलितं तदा कदाचित् सा मल्लिनाथस्य विषयम् उपस्थाप्य– "तस्य सङ्गीतगोष्ठीं राजास्थाने आयोजयतु भोः" इति सूचितवती।

'प्रयत्नं करिष्यामि' इति उक्त्वा ततः गतः शशिधरः अल्पे एव काले राजास्थाने मल्लिनाथस्य सङ्गीतगोष्ठीं व्यवस्थापितवान्। मल्लिनाथस्य सङ्गीतनैपुण्यं श्रुत्वा सन्तुष्टः राजा तस्मै प्रभूतं धनं दत्तवान्, अन्यैः उपायनैः सत्कृतवान् च। एतदनन्तरं मल्लिनाथस्य सङ्गीतविद्यालयः समग्रे देशे प्रसिद्धः जातः

कदाचित् सङ्गीतं श्रुत्वा गन्तुम् उद्युक्तां हरिणीम् उक्तवान् मल्लिनाथः– "हरिणि! बहोः कालतः मनसि स्थितं विचारम् अद्य प्रकटयन् अस्मि। अहं भवत्याम् अनुरक्तः अस्मि। भवती मां परिणेतुं सिद्धा वा?" इति।

तदा हरिणी किञ्चिदपि उद्वेगं अप्राप्नुवती शान्तेन स्वरेण– "मल्लिनाथ! अहं भवतः सर्वान् सङ्गीतकार्यक्रमान् आगच्छन्ती अस्मि यत् तत्र कारणं केवलं सङ्गीतप्रेम, नान्यत् किमपि। अतः पुनः कदाचित् अपि मम पुरतः विवाहप्रस्तावं मा उपस्थापयतु" इति उक्त्वा ततः निर्गतवती।

एतत् श्रुत्वा मल्लिनाथः नितरां खिन्नः। हरिणी अहङ्कारयुक्ता अविवेकिनी च इति निश्चितवान् सः।

अनन्तरदिने शशिधरस्य गृहं गता हरिणी तम् उक्तवती "शशिधर! यः विषयः युवत्या स्वयं न उपस्थापनीयः तादृशं कञ्चन विषयम् उपस्थापयन्ती अस्मि। अतः मां निर्लज्जां मा भावयतु। मातापितरौ मम विवाहार्थं प्रयत्नं कुर्वन्तौ स्तः। अहं भवति अनुरक्ता अस्मि। किं वदति भवान् एतद्विषये?" इति।

शशिधरः सन्तोषेण एतं प्रस्थावम् अङ्गीकृतवान्। ततः अल्पे एव काले हरिणी-शशिधरयोः विवाहः सवैभवं सम्पन्नः।

वेतालः एवं कथां समाप्य अवदत्– "अये राजन्! सङ्गीतासक्ता हरिणी प्रसिद्धिं प्राप्तवन्तं सङ्गीतविद्वांसं मल्लिनाथं



निराकृत्य शशिधरं परीणीतवती। एवं तर्हि हरिणी अहङ्कारयुक्ता अविवेकिनी च न वा? आरम्भे यदा मल्लिनाथः प्रार्थितवान् तदा शशिधरः राजास्थाने सङ्गीतगोष्ठीं न आयोजितवान्। यदा हरिणी पुनः प्रार्थितवती तदा आयोजितवान्। एवं तर्हि शशिधरः ईर्ष्यावान् न वा? मल्लिनाथे तस्य आदरः न आसीत् वा? एतेषां प्रश्नानाम् उत्तरं जानन् अपि यदि भवान् न वदेत् तर्हि भवतः शिरः सहस्रधा भग्नं भवेत्" इति।

तदा मौनं स्थातुम् अशक्तः त्रिविक्रमः उक्तवान्– "हरिणी अहङ्कारयुक्ता अविवेकिनी वा सर्वथा न। राजाश्रयरहिते गुरुकुले तया विद्याभ्यासः कृतः। अतः तर्कसङ्गतं चिन्तनं कर्तुं समर्था जाता सा। अत एव सा कीर्तेः धनस्य वा मोहे न पतिता। गुणवन्तं शशिधरम् एव परिणीतवती सा।

शशिधरेण अपि मल्लिनाथविषये अनुचितं किमपि न आचरितम्। उदारः शशिधरः मल्लिनाथस्यापि हितम् एव चिन्तितवान्। मल्लिनाथेन यदा प्रार्थितं तदा राजसभायां सङ्गीतगोष्ठी न आयोजिता यत् तत्र कारणं न ईर्ष्या, अपि तु दूरदर्शिता। अर्हतामात्रं राजास्थाने प्रायः अकिञ्चित्करम् एव भवति। यदि प्रमुखाः उच्चोद्योगिनः च अर्हतायाः प्रंशसां कुर्युः तर्हि तस्याः मान्यता राजास्थाने अपि। अतः एव शशिधरः प्रमुखाणाम् उच्चोद्योगिनां च पुरतः मल्लिनाथस्य योग्यताम् उक्तवान्। यदा हरिणी शशिधरं प्रार्थितवती तदा तु कालः पक्वः आसीत्। मल्लिनाथस्य योग्यता सर्वैः ज्ञाता आसीत्। अतः मल्लिनाथस्य सङ्गीतगोष्ठीं व्यवस्थापितवान् शशिधरः। हरिण्या निवेदनं, शशिधरेण आयोजनम् एतदुभयं काकतालीयन्यायेन युगपत् प्रवृत्तं, तावदेव" इति।

एवं वदता त्रिविक्रमेण मौनभङ्गः कृतः आसीत्। अतः शवान्तर्गतः वेतालः ततः अदृश्यः भूत्वा यथापूर्वं वृक्षस्य शाखाम् अवलम्बितवान्।



## चन्दमामानुबन्धः-१६

# ज्ञानभाण्डागारम्

## सः कः स्यात्?

देहलीनगरशासकः कश्चन यवनराजः जैत्रयात्रार्थं प्रस्थितवान्। सर्वान् राज्ञः जित्वा विजयगर्वेण राजधानीं देहलीनगरं प्रति आगच्छन् आसीत् सः।

तस्मिन् काले देहलीनगरे कश्चन यवनः देवभक्तः आसीत्। एषः देवभक्तः तस्मै यवनराजाय न रोचते। अतः देवभक्तस्य शिष्यः कश्चित् आगत्य उक्तवान्– "श्रीमन्! राजा देहलीं प्रत्यागच्छन् अस्ति। अतः भवान् अन्यत्र गच्छति चेत् वरं स्यात्" इति।

तदा देवभक्तः उक्तवान्– "राज्ञः देहलीनगरस्य च मध्ये महत् अन्तरम् अस्ति" इति।

देवभक्तस्य वचनं श्रुत्वा तत्रत्याः सर्वे आश्चर्यचकिताः अभवन्। यतः राजा देहलीनगरसीमां प्राप्तवान् आसीत्।

राज्ञः स्वागतार्थं सुविशालं महत् तोरणं सज्जीकृतम् आसीत्। यावत् राजा एतस्य स्वागततोरणस्य अधः आगतवान् तावता अकस्मात् तत् तोरणं महाराजस्य उपरि पतितम्। राजा मृतः अभवत्। देवभक्तेन यत् उक्तं तत् सत्यम् एव जातम्। राजा देहलीतः सुदूरं गतवान्।

सः देवभक्तः कः? यवनराजश्च कः?

(उत्तरं ३६तमे पृष्ठे)

## अपि भवान् जानाति?

१. प्रपञ्चे अत्यधिकसङ्ख्याकैः भाष्यमाणा भाषा का?
२. प्रपञ्चे रेखागणितम् आधारीकृत्य सर्वप्रथमं लिखितः ग्रन्थः कः?
३. भारते इदानीं जनानां सामान्यम् आयुर्मानं किम्?
४. कः देशः अत्यधिकां शर्कराम् उत्पादयति?
५. कः देशः अत्यधिकानि चलनचित्राणि निर्माति?

(उत्तराणि ३६तमे पृष्ठे)

# कन्याकुब्जं, यत् इदानीं कनोज्

उत्तरप्रदेशराज्ये फरूकाबाद्मण्डले स्थितं कनौज् एकं लघु नगरम्। एतस्य नगरस्य समीपे अर्धवृत्ताकारेण प्राचीनस्य कन्याकुब्जनगरस्य अवशेषाः ७ की.मी. यावत् प्रसृताः सन्ति।

महाभारतकाले, ततः पूर्वम् अपि, कन्याकुब्जनगरं महतः साम्राज्यस्य राजधानी आसीत्। सप्तमे शतके एतत् नगरं, असङ्ख्येभ्यः आलयेभ्यः बौद्धारामेभ्यः च निर्गच्छद्भिः शङ्खध्वनिभिः घण्टानादैः च प्रतिध्वनितं भवति स्म।

सुप्रसिद्धः चीनायात्रिकः ह्यूयनुत्साङ्ग् क्रि.श. ६२६ तमे वर्षे एतत् नगरम् आगतवान्। सप्त वर्षाणि यावत् अत्रैव स्थितवान् चापि।

कन्याकुब्जं राजधानीं परिकल्प्य हर्षवर्धनः राज्यशासनं करोति स्म। हर्षवर्धनस्य शासनकाले अत्र अनेके तटाकाः निर्मिताः। विशालाः राजमार्गाः उद्यानानि च निर्मितानि। यात्रिकाणां निमित्तं तत्र तत्र धर्मशालाः अपि निर्मिताः। एवं हर्षवर्धनः कन्याकुब्जं सुन्दरनगररूपेण सज्जीकृतवान् आसीत्।

एकादशशतकस्य आदिमे भागे राज्ञा



महम्मदेन एतस्य नगरस्य उपरि आक्रमणं कृतम्। तत्कारणतः नगरस्य प्रमुखाः भागाः उध्वस्ताः अभवन्। अनन्तरकाले राठौर्राजाः एतस्य नगरस्य पुनर्निर्माणं कृतवन्तः।

अन्तिमः राठौर्राजः जयचन्द्रः। एतस्य इच्छां विरुद्ध्य एतदीयां कन्याम् अजमेर-दिल्ली-शासकः पृथ्वीराजः परिणीतवान्। एतेन क्रुद्धः जयचन्द्रः प्रतीकारं साधयितुम् इच्छन् महम्मद-घोरिवर्यं साहाय्यं प्रार्थितवान्। आक्रमणार्थं गतः महम्मदः प्रथमं पृथ्वीराजेन पराजितः अभवत् चेदपि अनन्तरकाले जयं प्राप्य पृथ्वीराजं यमसदनं प्रेषितवान्।

महम्मदघोरी एतावता एव तृप्तः न जातः। सः प्रतिगच्छन् जयचन्द्रम् अपि पराजितवान्।

महम्मदस्य सेनापतिना कुतुबुद्दीनेन जयचन्द्रः क्रि.श. ११९२ तमे वर्षे मारितः अभवत्।

# रसवार्ताः




## परिसरमालिन्यम्

एवं हि श्रूयते यत् मुम्बईनगरे वायुसेवनेन प्रतिदिनं तावती हानिः भवति, यावती हानिः दशधूमवर्तिकासेवनेन भवति। नगरेषु इदानीं परिसरमालिन्यं भीतिजनकं सञ्जातम् अस्ति। देहलीनगरस्य स्थितिः अपि तृप्तिकरी नास्ति। प्रपञ्चे कालुष्यपूर्णेषु प्रमुखेषु दशसु नगरेषु देहली अपि अन्यतमम्।

एषु दिनेषु यत् सर्वेक्षणं प्रवृत्तं ततः एतत्सर्वं ज्ञातम् अस्ति। एषा भयानकस्थितिः निवारणीया चेत् सर्वकारेण स्वायत्तसंस्थाभिः, आसक्तैः जनैः च सम्भूय तीव्रः प्रयत्नः करणीयः।

## प्राणरक्षकं नूतनं यन्त्रम्

हिममये जले अर्धघण्टां यावत् मज्जितः कश्चित् मरणात् रक्षितः भवितुम् अर्हति किम्? लास्वेगस्निवासी मुर्रे ब्रौन् कदाचित् हिममये प्रवाहे मज्जितः अभवत्। यदा सः तीरम् आनीतः तदा सर्वैः चिन्तितम् आसीत् यत् एषः मृतः एव स्यात् इति। तदीयं मस्तिष्कं क्रियारहितम् आसीत्। किन्तु डा।। ल्यारी जेण्टलेलोवर्येण सज्जीकृतस्य अत्याधुनिकस्य यन्त्रस्य साहाय्येन विशिष्टेन क्रमेण ब्रौन्शरीरे उष्णता उत्पादिता। एतस्य परिणामतः अल्पे एव काले ब्रौन् यथापूर्वम् अभवत्। चिकित्साक्षेत्रे एषः कश्चन अपूर्वः प्रयोगः इति भाव्यते इदानीम्।



# सम्पादयेम वयं साहित्यज्ञानसम्पदम्

१. सुप्रसिद्धे बालोपयोगिपुस्तके के – ये च वास्तविकतया ज्येष्ठान् मनसि निधाय विरचिते आस्ताम्?

२. बैबल्ग्रन्थस्य भागद्वयस्य नाम किम्?

३. प्रथमे भागे कति अध्यायाः सन्ति?

४. द्वितीये भागे कति अध्यायाः सन्ति?

५. प्रपञ्चे अतिप्राचीनः गद्यग्रन्थः कः?

# उत्तराणि

## सः कः स्यात्?

निजामुद्दीन्, राजा घियासुद्दीन् च।

## सामान्यज्ञानम्

१. चीनीभाषा।

२. भारतदेशे क्रि.पू. ८ शतके लिखितानि 'शुल्बसूत्राणि'।

३. ५४ वर्षाणि।

४. भारतदेशः।

५. भारतदेशः।

## साहित्यज्ञानम्

१. मार्क् ट्वैन्वर्येण लिखितं– 'टाम्सायर्' 'हकिल् बेर्री फिन्' च।

२. 'ओल्ड् टेस्टमेण्ट्' 'न्यू टेस्टमेण्ट्' चेति।

३. ३९.

४. २७.

५. महाभारतम्।



# त्रयः प्रश्नाः

गान्धारं मालवं च सुविशालौ समृद्धौ देशौ। तयोः मध्ये कौमुदीनामकं लघु राज्यम् आसीत्। द्वित्रशताधिकवर्षेभ्यः पूर्वं तत् राज्यम् अपि सुविशालम् एव आसीत्। किन्तु तदा तदा प्रवृत्तेषु युद्धेषु देशस्य केचन सीमाभागाः अन्यदेशस्य अधीनाः जाताः। अतः कौमुदीराज्यं लघु जातम् आसीत्।

इदानीं कौमुदीराज्यं चन्द्रकान्तः नाम राजा परिपालयति स्म। तस्य पुत्राः न सन्ति। ज्योत्स्नानामिका एका एव पुत्री अस्ति। ताम् एव पुत्रं भावयन् राजा राजोचिताः सर्वाः विद्याः पाठितवान् आसीत्। ज्योत्स्ना यदा प्राप्तवयस्का जाता तदा तस्याः सौन्दर्यं सर्वत्र प्रसिद्धं जातम्। यथा सौन्दर्यं प्रसिद्धं तथैव तस्याः बुद्धिमत्ता अपि विख्याता आसीत्।

राजा चन्द्रकान्तः पुत्र्याः बुद्धिमत्तां सौन्दर्यं च दृष्ट्वा यथा सन्तुष्टः भवति तथैव तस्याः विवाहं स्मृत्वा खिन्नः अपि भवति। 'योग्यं वरं चित्वा तस्मै पुत्री दातव्या, जामाता एव राज्यस्य उत्तराधिकारी भवेत्' इति राज्ञः इच्छा। किन्तु राजकुमार्याः विवाहसमस्या न तथा सुलभा।

कदाचित् राजा पुत्रीं स्वसमीपम् आहूय उक्तवान्– "वत्से! वर्धमानां भवतीं दृष्ट्वा अहं सन्तोषम् अनुभवामि। योग्ये काले भवत्याः विवाहः निर्वर्तनीयः इति चिन्तयामि च। किन्तु भवत्याः विवाहः अपरिहार्यां राजकीयसमस्याम् उद्भावयेत् इति भीतिः मम। अस्माकं देशम् उभयतः द्वौ बलशालिनौ देशौ स्तः इति भवती जानाति एव खलु? मालवदेशस्य राजकुमारः सिंहवर्मा भवतीं परिणेतुम् इच्छति इति श्रूयते। युद्धे मां पराजित्य अपि भवतीं परिणेतुं सः सिद्धः इति गुप्तचरद्वारा ज्ञातं मया।



गान्धारदेशस्य राजकुमारस्य कृष्णवर्मणः इच्छा का इति सम्यक् न जानामि चेदपि सुन्दरीं भवतीं परिणेतुं सः इच्छेत् एव इति अहं भावयामि। सिंहवर्मा कृष्णवर्मा च अर्हौ एव। किन्तु कस्मैचित् एकस्मै भवती दत्ता चेत् अपरः क्रुद्धः सन् युद्धार्थम् आगच्छेत्। अस्माकं सैन्यबलम् अत्यल्पम्। अतः तदा देशस्य गतिः शोचनीया स्यात्'' इति।

एतावत् उक्त्वा मौनम् आश्रितः चन्द्रकान्तः चिन्ताक्रान्तः सन् पुत्र्याः मुखं निर्निमेषं पश्यति। तदा ज्योत्स्ना हसन्ती उक्तवती– ''तात! इतोऽपि अन्यत् अपि वक्तुम् इच्छा अस्ति इति भवतः मुखं सूचयति। किमर्थं मध्ये स्थगितवान्? वदतु तावत्'' इति।

''वत्से! अद्य सर्वं वदामि। वस्तुस्थितिं दीर्घकालं गोपयितुं न इच्छामि अहम्। भवत्या माता अनुरोधपूर्वकं वदति यत् मम अनुजाय एव आवयोः पुत्री दातव्या इति। 'सिंहासनम् अन्यस्य कस्यचित् अधीनं न भवेत्। मम अनुजः माणिक्यवर्मा ज्योत्स्नां परिणेष्यति चेत् सर्वं सुष्ठु भविष्यति' इति वदति सा। एवं त्रिकोणसमस्या एषा। देशस्य अहितं यथा न सम्भवेत्, कस्यापि खेदः अपि यथा न भवेत् तथा समस्या जागरूकतया परिहर्तव्या। तत् कथम् इति अहं तु न जानामि। विवाहः रक्तपातस्य कारणं यथा न स्यात् तथा कमपि परिहारोपायं सूचयितुम् शक्नोति वा भवती? बुद्धिमत्तया भवती सुप्रसिद्धा। सा बुद्धिमत्ता इदानीं कार्योपयोगिनी भवतु'' इति उक्तवान् राजा चन्द्रकान्तः।

तदा ज्योत्स्ना मन्दहासपूर्वकम् उक्तवती– ''तात! एतत्सर्वं मया अविदितं तु न। समस्या केन प्रकारेण परिहरणीया इति चिन्तितवती अपि अस्मि अहम्। अहं तिस्रः परीक्षाः सूचयामि। तासु परीक्षासु यः उत्तीर्णः भविष्यति तम् एव परिणेष्यामि। एतेन समस्या निश्चयेन परिहृता भविष्यति। एतां वार्तां सर्वेभ्यः देशेभ्यः प्रेषयतु। ये पराजिताः भवन्ति ते मौनं गच्छेयुः इति तु नियमः'' इति।

पुत्र्याः वचनं श्रुत्वा सन्तुष्टः राजा हसन्– ''योग्यः उपायः एषः। किन्तु ताः तिस्रः

परीक्षाः काः?" इति पृष्टवान्।

तदा ज्योत्स्ना हसन्ती – "त्वरा किमर्थम्? अचिरात् एव सर्वं ज्ञास्यति एव भवान्" इति उक्तवती।

सर्वेभ्यः देशेभ्यः अपि वार्ता प्रेषिता। परीक्षार्थम् अपेक्षितः सन्नाहः अपि कृतः। बहवः राजकुमाराः आगताः। किन्तु ते पराजयं प्राप्य शिरः अवनमय्य मौनं प्रतिगतवन्तः।

पार्श्वदेशीयौ राजकुमारौ सिंहवर्म-कृष्णवर्माणौ माणिक्यवर्मा चापि कौमुदी-राज्यम् आगतवन्तः। तेषां चलनवलनं सूक्ष्मं परिशीलयितुं गुप्तचरान् नियोजितवती आसीत् ज्योत्स्ना। माणिक्वर्मणः कृष्णवर्मणः परस्परपरिचयः अत्र जातः, तौ दिनद्वयाभ्यन्तरे आत्मीयौ अपि जातौ इति ज्ञातं ज्योत्स्नया। माणिक्यवर्मा परीक्षायां पराजितः, सिंहवर्मा अपि असफलः जातः इत्यपि ज्ञातं तया।

सा तत्क्षणे एव पितरं सूचितवती यत् यत्र कृष्णवर्मा निवसति तस्य भवनस्य विशेषरक्षणव्यवस्था भवतु इति।

अनन्तरदिने कृष्णवर्मा परीक्षामन्दिरम् आगतवान्। तत्र स्थिताः ज्योत्स्नायाः सख्यः तम् आदरेण स्वागतीकृतवत्यः। अनन्तरं ताः तम् एकं प्रकोष्ठं नीतवत्यः। तत्र भित्तौ विविधानि चित्राणि उत्तोलितानि आसन्। तेषां मध्ये अनुपमसुन्दर्याः ज्योत्स्नायाः अपि



चित्रम् आसीत्।

सख्यः कृष्णवर्मणे तानि चित्राणि प्रदर्शयन्त्यः उक्तवत्यः– "एतेषु चित्रेषु परमरमणीयं, चित्रकारस्य प्रतिभायाः द्योतकं च चित्रं किम्? एषा प्रथमा परीक्षा। एतस्याम् उत्तीर्णः द्वितीयपरीक्षार्थम् अर्हतां प्राप्नोति" इति।

कृष्णवर्मा तानि सर्वाणि चित्राणि जागरूकतया परिशीलितवान्। अन्ते एकं चित्रं प्रदर्श्य उक्तवान्– "एतत् एव उत्तमं चित्रम्" इति।

तस्मिन् चित्रे विविधैः वर्णमयैः पुष्पैः युक्तानां गुल्मानां मध्ये श्वेतवर्णीया काचित् धेनुः तर्णकं प्रीत्या लिहन्ती आसीत्। समीपे



यत् प्रदर्शितं तदेव श्रेष्ठं चित्रम्" इति।

"तत् कथम् इति निरूपयतु तावत्। वयं श्रोतुं कुतूहलिन्यः" इति उक्तवत्यः सख्यः।

"यदा कलायाः विमर्शनं कुर्मः तदा अस्माभिः शाश्वतस्य, निर्मलस्य च प्राकृतिकसौन्दर्यस्य एव प्राधान्यं दातव्यम्। अशाश्वतं मानवसौन्दर्यं नव रसान् द्योतयति चेदपि द्वितीयं स्थानं प्राप्तुम् अर्हति। प्राकृतिकं सौन्दर्यम् अस्पष्टं भवति। रेखाभिः तस्य चित्रणार्थं महत् कौशलम् अपेक्षितम्। मानवानाम् अङ्गसौष्ठवं तु स्फुटम् एव। यथास्थितं चित्रितं चेत् कार्यं सिध्यति। तस्य चित्रणे कलाकारेण चिन्तनं, विशेषपरिश्रमः वा करणीयः न भवति। एतस्य प्राकृतिकसौन्दर्यस्य चित्रणे कलाकारः पूर्णतः सफलः अस्ति। अतः एतत् एव अत्युत्तमं चित्रम्" इति उक्तवान् कृष्णवर्मा।

एतत् उत्तरं श्रुत्वा ताः सख्यः विनयेन कृष्णवर्माणं नमस्कृत्य– "अस्माकं राजकुमार्याः मनसि यत् अस्ति तदेव आविष्कृतं भवता। अतः एवम् अग्रे आगच्छतु। द्वितीयं प्रश्नं पठतु तावत्" इति उक्त्वा एकं तालपत्रं तस्मै दत्तवत्यः।

तस्मिन् तालपत्रे लिखितम् आसीत्– "भाविन्यां पत्न्यां पुरुषेण कः अंशः न द्रष्टव्यः? भाविनि पतौ स्त्रिया च कः अंशः न द्रष्टव्यः?" इति।

कृष्णवर्मा प्रश्नं पठित्वा समनन्तरम् एव स्थिते कासारे रमणीयानि कमलानि विकसितानि दृश्यन्ते स्म। नेत्रानन्दकरम् आसीत् तत् चित्रम्।

कृष्णवर्मणः वचनं श्रुत्वा काचित् सखी असमाधानं प्रकटयन्ती पृष्टवती– "केन आधारेण एतदेव चित्रम् उत्तमम् इति वदति भवान्? अनुपमसुन्दर्याः राजकुमार्याः चित्रम् अपि अस्ति अत्र। तस्य अपेक्षया अपि एतदेव कथम् उत्तमम्?" इति।

तदा कृष्णवर्मा हसन् उक्तवान्– "परीक्षार्थिना यत् उक्तं तत् निराकृत्य, आक्षेपवचनानि उक्त्वा परीक्षार्थिनि भ्रमः उत्पादनीयः इति सूचितवती अस्ति वा राजकुमारी? भवत्यः यत्किमपि वदन्तु, मया

उक्तवान्– "भाविन्यां पत्न्यां सौन्दर्यं प्रधानतया न गणनीयम्। परिणेतव्यस्य पुरुषस्य ऐश्वर्यम् अपि न गणनीयं स्त्रिया। यतः स्त्रियः सौन्दर्यं, पुरुषस्य ऐश्वर्यं च अशाश्वतम्" इति।

एतत् श्रुतवतीनां सखीनां मुखानि सन्तोषेण विकसितानि। ताः कृष्णवर्माणं नमस्कृत्य– "आर्य! ज्योत्स्नादेव्या आयोजिते परीक्षाद्वये अपि उत्तीर्णः भवान्। तृतीयां परीक्षां सम्मुखीकरोतु तावत्" इति उक्त्वा अन्तः गत्वा एकां श्रीगन्धपेटिकाम् आनीय दत्तवत्यः।

अनन्तरं ताः कृष्णवर्माणम् उक्तवत्यः– "परीक्षाद्वये अपि यः उत्तीर्णः भवति तस्मै एषा पेटिका दातव्या इति राजकुमार्याः आदेशः आसीत्। एतस्याः पेटिकायाः आन्तर्यं किम् इति एकदिनाभ्यन्तरे वक्तव्यं भवता। एतां पेटिकां वसतिं नीत्वा सुसूक्ष्मं परिशीलयितुम् अर्हति भवान्" इति।

कृष्णवर्मा पेटिकया सह वसतिम् आगतवान्। पेटिकां परीक्षादृष्ट्या सुसूक्ष्मं परिशीलितवान् च। चतुरस्राकारिकायाः तस्याः पेटिकायाः उपरितनभागे पार्श्वद्वये च विविधानि चित्राणि चित्रितानि आसन्।

पेटिकायाः अन्तः तु विविधजातीयानि शुष्कानि पर्णानि, कानिचन हरितानि पर्णानि, कण्टकानि, तृणानि च स्थापितानि आसन्। पेटिकायाः उपरि उदयमानः सूर्यः चित्रितः आसीत्। स च सूर्यः द्वाभ्यां सर्पाभ्याम् आवृतः आसीत्। लताभिः परिवेष्टिताः केचन वृक्षाः अपि तत्र चित्रिताः आसन्।

सुसूक्ष्मं परिशील्य तेषां सर्वेषाम् आन्तर्यं ज्ञातवान् कृष्णवर्मा। अनन्तरं सः भटद्वारा राजकुमारीं प्रति वार्तां प्रेषितवान् यत् पेटिकायाः तात्पर्यस्य भेदनार्थं दिनत्रयस्य अवधिः अपेक्षितः इति।

अन्धकारप्रसारस्य अनन्तरं कृष्णवर्मा वेषं परिवृत्य अश्वम् आरुह्य पूर्वस्यां दिशि प्रस्थितवान्।

(अग्रिमसञ्चिकायां समाप्ता भविष्यति।)



# वासनारहितः कः?

कदाचित् द्वौ तरुणसंन्यासिनौ नन्द-सुनन्दनामकौ अरण्यमार्गेण गच्छन्तौ आस्ताम्। तयोः गुरोः ज्ञाननेत्रस्य आश्रमः ततः सुदूरे अस्ति। सायङ्कालात् पूर्वम् आश्रमः प्राप्तव्यः इति चिन्तयन्तौ तौ वेगेन पदानि स्थापयतः। एवं गमनसमये काचित् नदी प्राप्ता। नद्यां जानुपर्यन्तम् एव जलम् अस्ति चेदपि प्रवाहस्य वेगः तीव्रः आसीत्।

यावत् तौ नद्यां पादं स्थापयितुम् उद्युक्तौ तावता ताभ्यां काचित् तरुणी दृष्टा। सा भयचकिता प्रवाहं पश्यन्ती स्थिता आसीत्।

"भगिनि, का भवती? कुत्र गन्तुम् इच्छति?" इति तां पृष्टवान् सुनन्दः।

"नद्याः तस्मिन् पार्श्वे मम ग्रामः अस्ति। प्रवाहस्य तीव्रतां दृष्ट्वा भीता अहम् अग्रे गमनं कथम् इति अजानती अत्र स्थितवती अस्मि" इति उक्तवती सा तरुणी।

"नदीक्रमणार्थम् अहं साहाय्यं करोमि। आगच्छतु" इति उक्त्वा हस्ताभ्यां ताम् उन्नीय नद्याः अपरं तीरं प्रापितवान् सुनन्दः।

तरुणी कृतज्ञतावचनानि उक्त्वा ततः निर्गतवती। एतौ संन्यासिनौ गुरोः आश्रमस्य मार्गम् अनुसृतवन्तौ। मार्गे सुनन्दः नन्देन सह वार्तालापार्थं द्वित्रवारं प्रयत्नं कृतवान्। किन्तु नन्दः मौनं स्थितवान् आसीत्।

यदा आश्रमः आसन्नः तदा नन्दः कठोरस्वरेण सुनन्दं पृष्टवान्– "मित्र! वयं सर्वसङ्गपरित्यागिनः, वासनारहिताः संन्यासिनः। संन्यासिनां स्त्रीदर्शनम् अपि अपराधाय एव। एवं स्थिते, भवान् नदीतीरे तरुण्या सह न केवलं वार्तालापं कृतवान्, अपि तु तां हस्ताभ्याम् उन्नीय नद्याः अपरं तीरम् आनीतवान्। किम् एतत् उचितं भवतः?" इति।

तदा सुनन्दः मन्दहासपूर्वकम् उक्तवान्– "भोः, मया तु तरुणी नद्याः तीरे एव परित्यक्ता। किन्तु सा भवतः मनस्तः इतोऽपि न अपगता इति भाति। तस्याः स्मरणम् इतोऽपि वहति भवान्" इति।





# वृत्तिदेवता

पूर्वं चीनादेशे कस्मिंश्चित् ग्रामे चाङ्गः नाम कश्चित् आसीत्। शिरस्त्राणि विक्रीय जीवनं यापयति सः। तस्य पूर्वजाः अपि एतया एव वृत्त्या जीवन्ति स्म। चाङ्गस्य पिता एतया वृत्त्या प्रभूतं धनं सम्पादितवान् आसीत्। सः स्वमरणसमये पुत्रम् उक्तवान् आसीत् यत् भवता एषा वृत्तिः कदापि न परित्यक्तव्या इति।

पितुः मरणस्य अनन्तरं चाङ्गः कदाचित् चिन्तितवान् यत् प्रभूतं धनं सङ्गृहीतम् अस्ति एव। एवं स्थिते किमर्थं वा एषा सामान्या शिरस्त्रविक्रयणवृत्तिः करणीया इति। किन्तु सः झटिति तां वृत्तिं परित्यक्तुम् अपि न सिद्धः। वृत्तिदेवी कुपिता भवेत् इति भीतिः। अतः सः वृत्तित्यागविचारं परित्यक्तवान्। असमीचीनानि शिरस्त्राणि सज्जीकृत्य विक्रेतुं गतवान्। तेषां मूल्यम् अधिकीकृत्य उक्तवान्। एतेन खिन्नाः ग्रामीणाः पार्श्वस्थात् ग्रामतः वाङ्गनामकं शिरस्त्रविक्रेतारम् आनायितवन्तः।

वाङ्गः शिरस्त्राणि रमणीयतया सीवयति। सः चाङ्गस्य आपणस्य पुरतः एव स्वकीयम् आपणम् उद्घाटितवान्।

कदाचित् चाङ्गः स्वस्य आपणे सुखेन उपविष्टवान् आसीत्। तदा तेन दृष्टं यत् कश्चन संन्यासी वाङ्गस्य आपणं प्रविशन् अस्ति। संन्यासिनः हस्ते सुवर्णवर्णेन शोभमानं हरिणचर्म आसीत्। संन्यासी तत् चर्म वाङ्गाय दत्त्वा 'एतेन एकम् उत्तमं भिक्षास्यूतं सज्जीकरोतु' इति उक्त्वा ततः निर्गतवान्। वाङ्गः आदिनं परिश्रमं कृत्वा चर्मणा भिक्षास्यूतं सज्जीकृतवान्। आपणस्य पुरतः उत्तोलितवान् च। किन्तु तस्मिन् दिने संन्यासी तं भिक्षास्यूतं नेतुं न आगतवान्।

"चीनादेशीया जानपदकथा"

अनन्तरदिनतः वाङ्गः धनम् अस्वीकृत्य एव ग्राहकेभ्यः शिरस्त्रं दातुम् आरब्धवान्। साधु-संन्यासिनां कृते भोजनं दातुम् अपि आरब्धवान् सः। पञ्चषेभ्यः दिनेभ्यः पूर्वम् अत्र आगत्य वाणिज्यम् आरब्धवता वाङ्गेन क्रियमाणस्य दानस्य पृष्ठभूमिः अन्या एव स्यात् इति चिन्तितवान् चाङ्गः।

अनन्तरदिने सायं वाङ्गः आपणस्य पिधानं कृतवान्। तदा चाङ्गः विना शब्दं गत्वा द्वारसन्धितः अन्तः दृष्टिं प्रसारितवान्। तत्र तेन दृष्टं यत् वाङ्गः संन्यासिनः निमित्तं सज्जीकृतस्य भिक्षास्यूतस्य विधूननं कुर्वन् अस्ति, भिक्षास्यूततः तु सुवर्णनाणकानि पतन्ति।

एतत् दृश्यं दृष्ट्वा चाङ्गः आश्चर्यचकितः। अनन्तरदिने अपि तेन एतत् एव दृश्यं दृष्टम्। 'एषः भिक्षास्यूतः चोरणीयः एव' इति निश्चितवान् सः।

अनन्तरदिने वाङ्गः यदा कार्यनिमित्तम् अन्तः गतवान् आसीत् तदा चाङ्गः चोरः इव विना शब्दम् आपणं प्रविश्य भित्तौ स्थितं भिक्षास्यूतं स्वीकृत्य, प्रत्यागतवान्।

अन्धकारप्रसारस्य अनन्तरं चाङ्गः आपणस्य पिधानं कृत्वा स्यूतविधूननं कृतवान्। किन्तु स्यूततः किमपि वस्तु न पतितं, प्रत्युत तस्य गृहे स्थितानि अमूल्यानि वस्तूनि अदृश्यानि अभवन्।

हताशः चाङ्गः वाङ्गस्य गृहं गत्वा आत्मना कृतम् अकार्यं निवेद्य क्षमां प्रार्थयन्– "मदीयं सर्वस्वं नष्टम्। मां कथमपि रक्षतु भोः" इति निवेदितवान्।

तावता तत्र बहवः जनाः सम्मिलिताः। तेषां मध्यतः पूर्वप्रस्तुतः संन्यासी उत्थाय– "अये चाङ्ग! स्ववृत्तौ भवतः आदरः नास्ति। अतः इतः परं भिक्षास्यूतः एव शरणं भवतः" इति उक्त्वा ततः अदृश्यः अभवत्।

तद्दिनतः चाङ्गः भिक्षास्यूतं स्वीकृत्य गृहं गृहं गत्वा भिक्षायाचनम् आरब्धवान्। वृत्तिदेवता एव संन्यासिरूपेण आगतवती आसीत् इति चीनादेशीयाः भावयन्ति।





# जगन्नाथचरितम्

इन्द्रद्युम्नः नाम राजा पूर्वम् अवन्तीनामकं राज्यं पालयन् आसीत्। सः धर्मेण राज्यं पालयति स्म। अतः तस्य राज्ये प्रजाः निश्चिन्ताः आसन्। राज्ये सुखं शान्तिः च सदा तिष्ठति स्म। युद्धभयं तु सर्वथा न आसीत्। सस्यसम्पत्तिः, धान्यसम्पत्तिः, धनसम्पत्तिः च तत्र पर्याप्तमात्रेण आसीत्।

इन्द्रद्युम्नः यथा समर्थः राजा तथैव कलाभिमानी, पण्डितप्रियः, कलापोषकः चापि आसीत्। तस्य गुणातिशयं, राज्यपालनक्रमं च अधिकृत्य कवयः स्फूर्त्या पद्यानि रचयन्ति स्म।

एवं देशे सर्वविधसमृद्धिः अस्ति चेदपि काचित् अमूर्ता असन्तृप्तिः राजानं सदा बाधते। तथापि एषा असन्तृप्तिः किमर्थम् इति न जानाति सः। असन्तृप्तेः स्वरूपम् अपि न ज्ञायते तेन। अतः सः तस्याः असन्तृप्तेः स्वरूपं कारणं च ज्ञातुम् अहोरात्रं चिन्तयन् भवति। निरन्तरमथनात् उत्पन्नं नवनीतम् अन्ते यथा पिण्डीभूतं भवति, तथैव निरन्तरचिन्तनेन असन्तृप्तेः स्पष्टं स्वरूपं ज्ञातम् इन्द्रद्युम्नेन।

'आगामिनि काले भक्तानां यात्रास्थलं भवितुम् अर्हं उत्तमं देवमन्दिरं किमपि स्वदेशे नास्ति' इति चिन्तितवान् सः। देवालयस्य अभावः एव एतावत्पर्यन्तम् अमूर्तरूपेण तिष्ठन् राजानं बाधते स्म। 'शीघ्रम् एव कश्चन उत्तमः देवालयः निर्मातव्यः' इति निश्चितवान् सः। एतदनन्तरं सा असन्तृप्तिपीडा अपगता।

१. मन्दिरनिर्माणम्।



देवालयस्य निर्माणस्य अनन्तरं काचित् देवतामूर्तिः अपि तत्र प्रतिष्ठापनीया भवति खलु? निर्मीयमाणे देवालये का मूर्तिः प्रतिष्ठापनीया इति बहुधा चिन्तितवान् राजा। किन्तु तेन कोऽपि निर्णयः न प्राप्तः।

इन्द्रद्युम्नः कदाचित् निद्रां कृतवान् आसीत्। तदा तेन स्वप्ने– 'प्रथमम् आलयस्य निर्माणं भवतु। योग्ये काले प्राप्ते प्रतिष्ठापनीया मूर्तिः स्वयं प्राप्यते' इति ध्वनिः तेन श्रुतः। 'देवेन एव एतादृशं वचनम् उक्तं स्यात्' इति भावितवान् सः। समस्या परिहृता। मनः निर्मलं जातम्।

अनन्तरदिने सः मन्त्रिणम् आहूय मन्दिरनिर्माणविषयम् उपस्थापितवान्। मन्दिरनिर्माणार्थं योग्यं स्थलं निश्चितम्। मन्दिरस्य आकारः अपि स्थूलतया निश्चितः। ज्योतिषिकाः ग्रहगतिम् अवलोक्य मन्दिरनिर्माणारम्भार्थं योग्यं मुहूर्तं निश्चित्य सूचितवन्तः।

पुरीनगरस्य समुद्रतीरे सुविशाले समतलस्थले निश्चिते मुहूर्ते मङ्गलवाद्यानां ध्वनिः उत्पन्नः। आगमशास्त्रज्ञाः होमाग्नौ मन्त्राहुतीः समर्पितवन्तः। तत्र सर्वत्र मन्त्राणां प्रतिध्वनिः श्रूयते। होमधूमेन समग्रः आकाशः व्याप्तः अभवत्।

आलयनिर्माणार्थम् अपेक्षिताः विशिष्टाः महाशिलाः सुदूरप्रदेशेभ्यः समागताः। समुद्रमार्गेण नदीमार्गेण च शिलाः आगताः। समुद्रतीरे शिलानां पर्वतः एव निर्मितः अभवत्। मन्दिरनिर्माणकार्यम् आरब्धम्।

देशस्य विविधेभ्यः कोणेभ्यः आगताः सहस्रशः शिल्पिनः कर्मकराः च अहोरात्रं कार्यं कृतवन्तः। रूक्षाः शिलाः शिल्पिनां कलाचातुर्यस्य कारणतः सुन्दरं रूपं प्राप्तवत्यः। शिलासु लताद्याकृतयः पौराणिकघटनाः च चित्रिताः अभवन्।

केषाञ्चित् वर्षाणाम् अनन्तरं मन्दिर-निर्माणकार्यं समाप्तम्। सागरतीरे मेघमण्डलस्पर्शी उन्नतः आलयः सिद्धः जातः। मन्दिरस्य सौन्दर्यं तावत् अस्ति यत् मन्दिरं पश्यन् द्रष्टा इहप्रपञ्चम् एव विस्मरति।

मन्दिरं द्रष्टुम् आगताः पृच्छन्ति– "मन्दिरं रमणीयम् अस्ति इति तु सत्यम् एव। किन्तु गर्भगृहे काऽपि मूर्तिः एव नास्ति खलु? कस्य देवस्य मन्दिरम् एतत्? कः अत्र प्रार्थनीयः?" इति।

इन्द्रद्युम्नस्य मनसि अपि एते प्रश्नाः उद्भवन्ति। 'स्वप्नवाणी मिथ्या न भवेत् खलु? विग्रहप्रतिष्ठापनयोगः इतोऽपि किमर्थं न प्राप्तः? निर्माणं समाप्तम् इति देवः किं न जानाति? जानन् अपि देवः किमर्थम् एवं क्रीडति?'

कदाचित् इन्द्रद्युम्नः आलयं प्रविश्य गर्भगृहस्य पुरतः उपविश्य अश्रूणि स्रावयन्– "देव! केन रूपेण भवान् भक्तान् अनुग्रहीतुम् इच्छति इत्येव न जानीमः वयम्। अत्र कीदृशी मूर्तिः स्थापनीया इति कदा सूचयति? महता श्रमेण निर्मिते एतस्मिन् देवालये मूर्तिम् अपश्यन्तः जनाः किं न उपहसन्ति? अस्माकं भक्तिं, श्रद्धां, श्रमं च मा व्यर्थीकरोतु कृपया। दयामय! करुणासागर! भक्तवत्सल! अस्मान् अनुगृह्णातु कृपया" इति प्रार्थितवान्।

राजा विविधैः प्रकारैः प्रार्थयन् अस्ति। तावता रात्रिः जाता। राजा प्रार्थयन् एव निद्रावशं गतः। तदा तेन स्वप्ने काचित् अशरीरवाणी श्रुता– "अत्रैव समीपे कृष्णरूपेण देवः अस्ति। तम् अन्विष्यतु। सः भवतः इष्टार्थं पूरयिष्यति" इति।

जागरितः इन्द्रद्युम्नः अशरीरवाण्यां दृढं विश्वसितवान। 'कृष्णस्य लीलाः





जगत्प्रसिद्धाः। सः भक्तैः सह क्रीडति। एषः च तस्य स्वभावः। अतः कृष्णस्य विग्रहः तथा सुलभतया न प्राप्येत' इति आलोचितवान् सः। 'निर्मलहृदयः, विवेकी भक्तः एव तं कृष्णम् अन्वेष्टुम् अर्हति' इति निश्चित्य राजा चतुरः पण्डितान् एतस्मिन् कार्ये नियोजितवान्। ते चतसृषु दिक्षु विग्रहस्य अन्वेषणार्थं प्रस्थितवन्तः।

तेषु चतुर्षु पण्डितेषु विद्यापतिः एव अल्पवयस्कः। सः पूर्वस्यां दिशि प्रस्थितः, किञ्चित् अग्रे गत्वा उत्तराभिमुखं गतवान्। तेन अग्रे महत् अरण्यं प्राप्तम्। मनसा कृष्णं ध्यायन् 'अरण्ये रक्षणस्य मार्गप्रदर्शनस्य च भारः कृष्णस्य एव' इति निश्चित्य अनन्यभावेन कृष्णस्य महिमानम् एव चिन्तयन् सः अग्रे गतवान्। यथा यथा अग्रे गम्यते तथा तथा अरण्यस्य गहनता अपि वर्धते।

एतस्मिन् अरण्ये कश्चन लघुपर्वतः दृष्टः विद्यापतिना। पर्वतशिखरतः काललयोपेतं मधुरं सङ्गीतं श्रूयते स्म। सङ्गीतरसम् आस्वादयन् अग्रे गतवान् विद्यापतिः। मृदङ्गध्वनिः, वेणुनादः, करपुटरवः च तेन स्फुटं श्रुतः। पर्वतस्य अन्यस्मात् पार्श्वतः एतत् सर्वम् आगच्छति इति ज्ञातवान् सः।

विद्यापतिः पर्वतम् आरुह्य अपरस्मिन् पार्श्वे दृष्टिं प्रसारितवान्। पर्वतस्य उपत्यकायां कश्चन रमणीयः परिसरः दृष्टः तेन। उपत्यकायां काश्चन शबरयुवतयः गायन्त्यः नृत्यं कुर्वन्ति स्म। कस्यचित् वृक्षस्य शाखां गृहीत्वा स्थित्वा नृत्यं पश्यन् सङ्गीतं शृणोति विद्यापतिः। सुदूरचलनात् सः नितरां श्रान्तः आसीत् खलु? इदानीं रमणीयस्य परिसरस्य, शबरयुवतीनां नृत्यस्य च दर्शनात्, मधुरस्य सङ्गीतस्य श्रवणात् च तस्य श्रान्तिः अपगता।

तावता अनतिदूरे एव व्याघ्रगर्जनं श्रुतम्। दिग्भ्रान्तः विद्यापतिः परिवृत्य दृष्टवान्। कश्चन घोरः व्याघ्रः गर्जन् तस्य समीपम् आगच्छन् अस्ति। निरायुधः विद्यापतिः किङ्कर्तव्यतामूढः सन् तत्रैव मूर्च्छां गतः।

तदा उपत्यकाप्रदेशतः कश्चन स्त्रीस्वरः

श्रुतः– 'व्याघ्रराज' इति। एतत् आह्वानं श्रुत्वा व्याघ्रः तत्रैव अतिष्ठत्।

"व्याघ्रराज! प्रत्यागच्छतु तावत्" इति कयाचित् स्त्रिया आदिष्टम्। एतम् आदेशं पालयन् व्याघ्रः अधः गत्वा आत्मानम् आहूतवत्याः स्त्रियः पादयोः समीपे विनयेन उपाविशत्। सा युवतिः व्याघ्रं प्रीत्या स्पृष्टवती। तत्रत्यासु एषा एव उन्नता सुन्दरी च आसीत्। तस्याः नाम ललिता इति। सा शबरराजस्य विश्वावसोः एकमात्रपुत्री।

ललितायाः आदेशानुसारं द्वे युवत्यौ विद्यापतिसमीपं त्वरया गतवत्यौ। एका पत्रपुटेन जलम् आनीय मुखस्य उपरि सिक्तवती। अपरा कदलीपत्रेण मृदु वीजितवती। विद्यापतिः सचेतनतां प्राप्य मन्दं नेत्रे उद्घाटितवान्। एका युवतिः पानार्थं जलं दत्तवती।

तावता ललिता तत्र आगत्य– "भवान् कः इति वयं न जानीमः। कुतः आगतः, कुत्र गच्छति इत्यपि न जानीमः। प्रायः अरण्ये मार्गभ्रष्ठः सन् अत्र आगतवान् स्यात्। एतादृश्याम् अवस्थायां स्थितं भवन्तम् एवम् एव प्रेषयितुं वयं न इच्छामः। अतः अस्माकं वसतिम् आगच्छति वा भवान्?" इति पृष्टवती।

तस्याः वचनं श्रुत्वा विद्यापतिः अङ्गीकारपूर्वकं शिरः चालितवान्। उत्थाय गन्तुं सिद्धः जातः च।



ललिता अग्रे प्रस्थिता। सख्यः ताम् अनुसृतवत्यः। विद्यापतिः अपि ताम् अनुसृतवान्। ललिता एकां सखीं सूचितवती यत् अग्रे गत्वा अस्माकम् आगमनं सूचयतु इति। सा युवतिः धावन्ती गत्वा वृक्षाणां मध्ये अदृश्या अभवत्।

अल्पे एव काले अग्रे स्थितात् पर्वतात् आगतः शबरराजः विश्वावसुः अभिमुखम् आगत्य विद्यापतिं नमस्कृत्य– "नूतनाय अतिथये हृत्पूर्वकं स्वागतम्" इति गम्भीरध्वनिना उक्तवान्।

विद्यापतिः अपि शबरराजं नमस्कृत्य आत्मनः परिचयं निवेद्य– "महाराजस्य इन्द्रद्युम्नस्य कार्यस्य निमित्तम् आगतवान्



अस्मि'' इति उक्तवान्।

शबरराजः विश्वावसुः विद्यापतिम् आदरेण स्ववसतिं नीतवान्। वसत्यादिनिमित्तं सर्वाः व्यवस्थाः उपकल्पिताः। विद्यापतिः पण्डितः इति ज्ञातवतः विश्वावसोः महान् सन्तोषः। सः विद्यापतिं प्रार्थितवान् यत् भवता अत्रैव कानिचन दिनानि स्थित्वा वेदान्तविचारः बोधनीयः इति।

विद्यापतिः एतं प्रस्तावम् अङ्गीकृतवान्। अत्रत्येन सङ्गीतेन वशीकृतस्य तस्य मनः अपि अत्र वासम् इच्छति स्म एव। सः श्रुतीनाम् अर्थं, स्मृतीनां सारं, पुराणकथाः च सरलया शैल्या उदाहरणपुरस्सरं श्रावयति स्म। तस्य बोधनक्रमः रमणीयः आसीत्। राजा विश्वावसुः राजकुमारी ललिता च आसक्त्या तस्य पाठं शृणुतः।

ललिता विद्यापतौ विशेषादरं प्रकटयति स्म। एतत् विद्यापतिना अपि लक्षितम् एव। किन्तु सः जानाति स्म यत् अहं महोन्नतस्य कार्यस्य साधनार्थं प्रस्थितः इति। अतः सः सदापि कर्तव्यं स्मरन् भगवद्ध्यानेन कालं यापयन् आसीत्।

अत्रान्तरे कदाचित् विद्यापतिः तीव्रम् अस्वस्थः जातः, शय्याम् आश्रितवान् च। तदा ललिता परमया श्रद्धया तस्य उपचारं कृतवती। परस्परसान्निध्यतः उभौ आत्मानौ सन्निहितौ जातौ। विद्यापतिः ज्ञातवान् यत् मनः सीमाम् अतिक्रम्य व्यवहरत् अस्ति इति, अभिमानः अनुरागरूपेण परिवृत्तः अस्ति इति च। तावता ललितायाः पिता विश्वावसुः स्वयम् आगत्य 'मम पुत्रीं परिणयतु' इति प्रार्थितवान्। विद्यापतिः सम्मतिं प्रदर्शितवान्।

शबरयुवक-युवतीनां नृत्यगानादीनां मध्ये ललिता-विद्यापत्योः विवाहः सवैभवं सम्पन्नः।

दिनानि एवम् एव गतानि। ललितायाः परिणयतः सन्तुष्टः अस्ति विद्यापतिः। तथापि यदर्थं प्रस्थितं तत् कार्यम् अंशतः अपि न सिद्धम् इति खेदः तु तं बाधते।

अत्रान्तरे विद्यापतिना कश्चन विशेषविषयः लक्षितः। विश्वावसुः

प्रतिदिनम् अपि प्रातः उत्थाय कुत्रापि गच्छति। सूर्योदयानन्तरं प्रत्यागच्छति च। एवं गमनागमनं नियमरूपेण प्रचलति स्म। वृष्टिः, शैत्यं, झञ्झावातः इत्यादयः अपि एतं नियमं भञ्जयितुं न अर्हन्ति स्म।

विद्यापतिः विश्वावसोः एतत् नियमपालनस्थैर्यं दृष्ट्वा आश्चर्यचकितः। 'सः प्रतिदिनं कुत्र गत्वा आगच्छति इति ज्ञातव्यम्' इति कुतूहलम् अपि प्रवृद्धम्। सः ललिताम् एतद्विषये पृष्टवान्। तदा ललिता उक्तवती– "तत् तु रहस्यम्। केनापि न ज्ञातव्यं तत्" इति।

किन्तु अन्ते पत्युः अत्यासक्तिं शमयितुं सा उक्तवती– "भवतः अत्यासक्तिं दृष्ट्वा, आत्मीयतां च मनसि निधाय वदन्ती अस्मि। इतः समीपे काचित् गुहा अस्ति। गुहायां काचित् देवमूर्तिः अस्ति। अस्माकं पूर्वजैः सर्वैः पूजितः सः देवः। तस्य आराधनं प्रतिदिनम् अपि युक्ते समये भवेत् इति नियमः अस्ति। अतः मम पिता प्रातः तथा गच्छति। जनैः एतत् न ज्ञातव्यम्। तत्र जनाः सम्मिलिताः चेत् देवः गुहातः अदृश्यः भविष्यति इति श्रूयते" इति।

"मया अपि सः देवः द्रष्टव्यः एव। रहस्यपालनम् अहम् अपि जानामि। श्वशुरेण यत् ज्ञातं तत् जामात्रा अपि ज्ञातं चेत् न कोऽपि दोषः" इति उक्तवान् विद्यापतिः।

"भवतः वचनं युक्तम् एव स्यात्। रहस्यम् अन्यैः न ज्ञातव्यम् एव इति अस्ति पितुः आशयः। एवं स्थिते सः कथं वा भवता क्रियमाणं देवदर्शनम् अङ्गीकुर्यात्? अतः एतादृशीम् इच्छां परित्यजतु कृपया" इति प्रार्थितवती ललिता।

"एवं तर्हि अहं कश्चन परकीयः संवृत्तः" इति खेदेन उक्तवान् विद्यापतिः।

क्षणकालम् आलोच्य उक्तवती ललिता– "खेदं मा अनुभवतु। भवन्तं नीत्वा देवं प्रदर्शयितुं पितरं सूचयिष्यामि" इति।

–(अनुवर्तते)






# साहसी विक्रमः

उज्जयिनीराज्यं सदापि श्रेष्ठैः महाराजैः पालितं भवति स्म। किन्तु कदाचित् कश्चन असमर्थः तस्य पालकः अभवत्। सः न तीक्ष्णमतिः, न वा न्यायपरः। भोगे लीनः सन् स्वेच्छया व्यवहरति स्म सः। अतः केचन साहसिनः युवकाः सम्भूय राजानं विरुध्य व्यवहृतवन्तः। युद्धं कृतवन्तः च। राजविरोधः तीव्रतरः एव आसीत्। बहवः वीराः युवकाः एव एतस्मिन् कार्ये उद्युक्ताः आसन्। 'राजानं पदच्युतं कृत्वा मारयित्वा वा देशस्य हितं साधनीयम्' इति चिन्तयन्तः आसन् ते। एतस्मात् भीतः राजा उज्जयिनीतः पलायितवान्।

उज्जयिन्याः समीपे नर्मदानदी प्रवहति। नर्मदायाः अपरस्मिन् तीरे मार्तण्डराजस्य राज्यम् अस्ति। एषः उज्जयिनीराजः मार्तण्डराजं शरणं गतवान्। मार्तण्डः उज्जयिनीराजस्य दुष्टताम् अविगणय्य आश्रयं दत्तवान्। उज्जयिन्याः उपरि आक्रमणार्थं सन्नाहं कृतवान् चापि।

उज्जयिनीराज्यं वशीकरणीयम् इति मार्तण्डराजस्य इच्छा बहोः कालतः आसीत्। 'इदानीं तत् राजविहीनम् अस्ति। तद्देशीयः राजा शरणम् आगतः अस्ति। अतः शरणागतस्य रक्षणस्य व्याजेन युद्धं कृत्वा उज्जयिनी वशीकरणीया' इति आलोचितवान् आसीत् सः।

एतावता उज्जयिन्यां प्रजाराज्यं स्थापितम् अभवत्। ज्येष्ठाः, युवकाः, साहसिनः च सम्भूय प्रबलं सर्वकारं रचितवन्तः। दुष्टानि शासनानि अपसारितानि। अधिकारिणां स्वेच्छाचारः स्थगितः। जनाः चोराणां भीतितः मुक्ताः अभवन्। जनाः भावयन्ति स्म यत् नूतनं युगम् आरब्धम् इति। समग्रे देशे

"पञ्चविंशतिवर्षेभ्यः पूर्वं चन्दमामायां प्रकाशिता कथा"



सन्तोषमयः उत्साहपूर्णः च परिसरः दृश्यते स्म।

अत्रान्तरे गूढचराणां द्वारा ज्ञातं यत् मार्तण्डराजः उज्जयिन्याः उपरि आक्रमणार्थं सन्नाहं कृतवान् अस्ति इति। एतां वार्तां श्रुत्वा शासनधुरीणाः वृद्धाः, तेषां सहकारिणः तरुणाः च भीताः जाताः। यतः उज्जयिन्याः सैनिकशक्तिः नितरां दुर्बला अस्ति। राज्ञः मार्तण्डस्य सैन्यं सुसज्जितं प्रबलं च।

उज्जयिन्या सेनां प्रवेष्टुम् इच्छन्तः तरुणाः तु उत्साहेन आसन्। किन्तु तेषां शिक्षणार्थं पर्याप्तः अवकाशः न आसीत्। एतावता एव युद्धम् आपतितम् आसीत्।

विशाले अङ्गणे सार्वजनिकसभा आयोजिता। असङ्ख्याः युवकाः तत्र उपस्थिताः आसन्। ते सर्वे एकेन स्वरेण उक्तवन्तः– 'उज्जयिनी कथमपि रक्षणीया एव' इति।

"उज्जयिन्याः रक्षणं कथं करणीयम्? कः मार्गं सूचयिष्यति? उपायज्ञः अग्रे आगच्छतु तावत्" इति उक्तवन्तः वृद्धाः।

तदा विक्रमः नाम युवकः उत्थाय अग्रे आगत्य– "विंशतिं योधान् मह्यं यच्छन्तु। अहम् उज्जयिन्याः रक्षणं करिष्यामि। मार्तण्डराजस्य सैनिकशक्तिः कियती अस्ति इति अहं जानामि। तथापि मम विश्वासः अस्ति यत् अस्मदीया युवशक्तिः शत्रुसैन्यशक्तिं जेतुं शक्ता भविष्यति" इति धैर्येण उक्तवान्।

विक्रमस्य वचनं श्रुत्वा सर्वेऽपि आश्चर्यचकिताः। "विंशतिसहस्राधिकान् सैनिकान् विंशतिः सैनिकाः कथं वा सम्मुखीकर्तुम् अर्हन्ति? वयं प्रजातन्त्रपद्धत्या अल्पे काले गणनीयां प्रगतिं साधितवन्तः स्याम। किन्तु अस्माकं सैन्यशक्तिः दुर्बला इत्यत्र नास्ति संशयः। उत्साहेन कथनं सुकरम्। कार्यसाधनं तु तावत् सुलभं न" इति उक्तवान् ज्येष्ठः वृद्धः।

तदा विक्रमः उत्तरं दत्तवान्– "मार्तण्डराजस्य सैन्येन उज्जियिनी प्रवेष्टव्या चेत् एकः एव मार्गः शरणम्। नद्याः उपरि निर्मितेन सेतुमार्गेण एव आगन्तव्यम्।

सेतुमार्गे एकम् अनुसृत्य अपरेण आगन्तव्यं भवति। सेतोः स्तम्भानां पृष्ठतः अस्माकं सैनिकाः तिष्ठन्ति चेत् एकोऽपि शत्रुसैनिकः सेतुम् अतिक्रम्य यथा न आगच्छेत् तथा कर्तुं शक्यते। अनिवार्यता आपतिता चेत् सेतोः भञ्जनम् अपि शक्यते। अतः मार्तण्डराजस्य सैन्यबलं दृष्ट्वा भीतिः प्राप्तव्या नास्ति" इति।

एतम् उपायं श्रुत्वा सर्वे हर्षेण ध्वनिम् उत्पादितवन्तः। दृढाः विंशतिः युवकाः उत्थाय अग्रे आगतवन्तः। ते खड्गं परशुं च स्वीकृत्य सन्नद्धाः जाताः। विक्रमः तैः सह यथाशीघ्रं नर्मदायाः तीरं प्राप्तवान्।



सेतोः उपरि ते सर्वे सैनिकाः निलीय स्थितवन्तः। तेषां स्थितिः अन्यैः झटिति ज्ञातुं न शक्यते स्म। ते तु अनायासेन सेतोः उपरि गच्छन्तं मारयितुम् अर्हन्ति स्म।

शत्रूणां तीरस्य समीपे सर्वप्रथमं स्थितवान् अस्ति विक्रमः। सूर्योदयस्य अनन्तरं मार्तण्डराजस्य सैनिकाः तां काष्ठमयीं सेतुम् आरोढुम् उद्युक्ताः।

विक्रमः सेतोः उपरि पादं स्थापितवन्तं शत्रुसैनिकं निर्दयं मारयन् अस्ति। मार्तण्डराजस्य सैनिकाः एतत् दृष्ट्वा आश्चर्यचकिताः। केचन पुनरपि धैर्येण वस्तुस्थितिं ज्ञातुम् इच्छन्तः अग्रे गतवन्तः। किन्तु ते अपि प्राणैः वियुक्ताः जाताः। तदा अन्ये सैनिकाः भीत्या परिवृत्य धावितवन्तः।

मार्तण्डराजः एतां वार्तां श्रुतवान्। अग्रे किं करणीयम् इति तेन बहुधा चिन्तितम्। अनन्तरं सः सैनिकान् लघुगणरूपेण उडुपेन प्रेषितवान्। किन्तु एवम् उडुपेन किञ्चिद्दूरं गताः सैनिकाः, वृक्षगुल्मान्तरितानां उज्जयिनीसैनिकानां बाणैः प्रहृताः नद्यां पतितवन्तः, प्राणान् त्यक्तवन्तः च।

सेतुरक्षणार्थं ये उज्जयिनीसैनिकाः स्थितवन्तः आसन् तेषां स्थितिः अपि न उत्तमा। मृतानां सैनिकानां मध्ये सरन्तः मार्तण्डसैनिकाः शत्रूणां खड्गप्रहारतः आत्मानं रक्षन्तः कथमपि अग्रे गतवन्तः एव। एवम् अग्रे गताः ते स्तम्भान्तरितान् कांश्चन उज्जयिनीसैनिकान् मारयितुं शक्तवन्तः



एषः एकः एव उपायः अवशिष्टः। अतः अविलम्बेन कार्यप्रवृत्ताः भवन्तु" इति।

सैनिकाः तथैव कृतवन्तः। इदानीं सर्वे सैनिकाः उज्जयिनीतीरे सन्ति। विक्रमः एकाकी अपरस्मिन् तीरे अस्ति। एकः कियत्कालं यावत् शत्रून् सम्मुखीकुर्यात्? अल्पे एव काले सः शत्रुभिः बद्धः जातः। शत्रवः तं शिबिरं नीतवन्तः।

रात्रिसमये शिबिरे मार्तण्डराजः अनुचरैः सह अग्निं परितः उपविश्य युद्धविषये वार्तालापं कुर्वन् आसीत्। तावता सैनिकाः बद्धहस्तं विक्रमं तत्र आनीतवन्तः। अग्निज्वालायाः प्रकाशे विक्रमस्य तेजः स्फुटं दृश्यते स्म।

अपि।

'मार्तण्डराजस्य सैनिकाः एवं प्राणान् तृणीकृत्य अग्रे गच्छन्ति चेत् सेतुं स्वाधीनां कर्तुम् अपि अर्हन्ति' इति चिन्तितवान् विक्रमः। मार्तण्डराजः तु तीरे स्थित्वा स्वसैनिकान् प्राणान् तृणीकृत्य युद्धं कर्तुं निरन्तरं प्रोत्साहयन् आसीत्।

अनन्योपायः विक्रमः स्वस्य पृष्ठतः स्थितं सैनिकम् आदिष्टवान्– "अहं शत्रून् सम्मुखीकुर्वन् तिष्ठामि। मम पृष्ठतः भवान् सेतुं पातयतु। सेतोः पतनसमये पृष्ठतः अपसरतु। एवं भागशः सेतुं पातयन्तः आत्मानं रक्षन्तः गच्छन्तु भवन्तः। सेतुः शत्रूणाम् अधीना न भवेत् इति अस्ति चेत्

"अहं न भीरुः। भीरवः पलायनार्थं प्रयत्नं कुर्वन्ति, न तु वीराः। किमर्थं मम हस्तं बद्धवन्तः सन्ति? भवन्तः वीराः न वा? बन्धनम् अपसारयन्तु तावत्" इति धैर्येण उक्तवान् विक्रमः।

"सेतोः उपरि स्तम्भस्य पृष्ठतः युद्धं कुर्वन् स्थितः भवान् किं शूरः?" इति क्रोधेन पृष्टवान् मार्तण्डः।

"अधर्मयुद्धे कोऽपि युद्धनियमं न पालयति" इति उक्तवान् विक्रमः।

"मदीयम् अधर्मयुद्धं वा?" इति आश्चर्येण पृष्टवान् मार्तण्डः।

"अथ किम्? पूर्वम् उद्घुष्य खलु युद्धस्य आरम्भः करणीयः? तथा कृतं वा भवता?"

इति मार्तण्डं पृष्टवान् विक्रमः।

तदा मार्तण्डः उक्तवान्– "यस्मिन् देशे राजा एव नास्ति, तद्विरुद्धे युद्धे उद्घोषणं किमर्थम्?" इति।

"अस्माकं प्रजाराज्यम्। अस्माकं देशे प्रजाः एव राजानः" इति धैर्येण उक्तवान् विक्रमः।

"प्रजाः कदाऽपि राजानः भवितुं न अर्हन्ति। राजानं विना राज्यं स्थिरं न स्थास्यति च" इति दृढस्वरेण उक्तवान् मार्तण्डराजः।

"वयम् अस्मदीयं राज्यं स्थिरं स्थापयिष्यामः। मम बन्धनं प्रथमम् अपनयतु। भवता सह किञ्चित् वार्तालापः अस्ति मम" इति उक्तवान् विक्रमः।

राजा मार्तण्डः विक्रमस्य बन्धनम् अपनीय उपवेशनार्थम् आसनं प्रदर्शितवान्।

"अहं भवद्देशीयाः प्रजाः क्षणमात्रेण नाशयितुम् अर्हामि। भवादृशान् भीरून् तृणाय मन्ये अहम्। यावत् भवतां देशे कोऽपि राजा न भवति तावत् भवतां देशं राज्यत्वेन न परिगणयामि" इति उक्तवान् मार्तण्डः।

"मम देशे कृतिशूराः मादृशाः बहवः सन्ति। मत्तः अपि समर्थाः अपि न अल्पाः। वयम् अस्मदीयं राज्यं प्राणसमं भावयामः। अस्माकं दृढतां स्थैर्यं च प्रदर्शयामि तावत्" इति उक्त्वा विक्रमः अग्नौ वामहस्तं प्रसारितवान्।

हस्तः दह्यमानः अस्ति चेदपि विक्रमः हस्तं किञ्चिदपि न कम्पितवान्, न वा प्रतिस्वीकृतवान्। दह्यमानं हस्तं पश्यन् सः– "वयं साहसिनः वीराः। हिंसया पीडया वा भवान् अस्मान् जेतुं न अर्हति। प्रजाराज्यस्य रक्षणार्थं वयं सर्वस्वम् अपि अर्पयितुं सिद्धाः" इति उक्त्वा हस्तं प्रतिस्वीकृतवान्।

विक्रमस्य साहसं स्थैर्यं च दृष्ट्वा राजा मार्तण्डः आश्चर्यचकितः जातः। विक्रमं बन्धविमुक्तं कृत्वा 'भवन्तः प्रजाराज्य-पद्धत्या सुखेन तिष्ठन्तु' इति स्नेहेन उक्त्वा सः सेनया सह राजधानीं प्रतिगतवान्।





# राजनीतिज्ञः मन्त्री

मगधदेशस्य राजा चन्द्रसेनः। तस्य चत्वारः पुत्राः। ते गुरुकुले विद्याभ्यासं समाप्य प्रत्यागतवन्तः। राजा तान् सूचितवान् यत् मन्त्रिणः समीपं गत्वा एकं वर्षं यावत् राजनीतेः अध्ययनं कृत्वा आगच्छन्तु इति।

मन्त्री एतं विचारं ज्ञातवान्। सः राजानं चन्द्रसेनं दृष्ट्वा उक्तवान्– "प्रभो! राजकुमाराः गुरुकुले सर्वविधविद्याः अधीत्य आगतवन्तः सन्ति। राजनीतिसम्बन्धिनः सूक्ष्माः विचाराः तैः ज्ञातव्याः इति अस्ति चेत् ते विषयाः भवता एव पाठनीयाः। राजवंशीयेभ्यः अपेक्षितं मार्गदर्शनं मन्त्रिणां कार्यम्। किन्तु ते मन्त्रिणः साक्षात् किमपि न अध्यापयन्ति" इति।

एतत् श्रुत्वा चन्द्रसेनः हसन् उक्तवान्– "मन्त्रिवर्य! भवतः यावत् राजनीतिज्ञानम् अस्ति तस्य दशमः भागः अपि नास्ति मम। इतः पूर्वम् अनेकेषु सन्दर्भेषु भवतः दूरदर्शितायाः कारणतः एव बह्व्यः समस्याः परिहृताः। अतः राजकुमारान् राजनीतिं पाठयितुं भवान् एव समर्थतरः, न तु अहम्" इति।

राज्ञा यानि विश्वासयुक्तानि वचनानि उक्तानि तैः मन्त्री सन्तुष्टः। तथापि सः राजकुमारान् राजनीतिं पाठयितुं न सिद्धः। सः राजानं पुनः उक्तवान्– "प्रभो! राजनीतिज्ञानम् उपदेशतः न प्राप्यते। अनुभवबलात् तत् सम्पाद्यते। राजनीतिज्ञानं न सैद्धान्तिकम्, अपि तु प्रात्यक्षिकम्। अतः राजनीतिज्ञानस्य बोधनार्थं समयस्य व्ययीकरणं न उचितम्। अतः शासन-कार्यभारं तेषाम् उपरि आरोपयतु। अपेक्षिते काले अहं साहाय्यं करोमि, मम पुत्रः वा

साहाय्यं करिष्यति" इति।

तदा राजा उक्तवान्– "मन्त्रिवर्य! शासनकार्यभारः आरोपणीयः इत्येव ममापि इच्छा। किन्तु एतेषु चतुर्षु राज्यस्य उत्तराधिकारी कः भवेत् इति प्रथमं निर्णेतव्यं खलु? तथा निर्णयार्थम् एव अहम् एतान् मम चतुरः पुत्रान् राजनीतिशिक्षणव्याजेन भवतः समीपं प्रेषयन् अस्मि" इति।

"महाराज! अस्माकं देशस्य परम्परा यत् ज्येष्ठः पुत्रः राजा भवेत् इति। एवं तर्हि ज्येष्ठः धर्मसेनः एव राजा स्यात्, न तु अन्यः। परम्परायाः त्यागः उचितः न खलु?" इति उक्तवान् मन्त्री।



राजा क्षणकालम् आलोच्य उक्तवान्– "परम्परायाः व्याजेन अर्हतायाः उपेक्षा न उचिता। बहुभ्यः वर्षेभ्यः अस्माकं वंशजाः एकपुत्रवन्तः एव आसन्। अतः इतः पूर्वम् एतादृशी समस्या न उत्पन्ना आसीत्। अतः मम आशयः यत् मम चतुर्षु पुत्रेषु यः योग्यतावान् अस्ति तस्मै एव राज्यं दातव्यम् इति। एतेन एव जनानां हितं सेत्स्यति। अतः भवता एतस्मिन् विषये अवश्यं सहकारः दातव्यः। सहकारदानं न निराकरणीयम्" इति।

राज्ञः एषः प्रस्तावः मन्त्रिणे न अरोचत। सः एकवारं हसित्वा मौनं स्थितवान्। तदा राजा मन्त्रिणं पृष्टवान्– "किमर्थं हसितवान् भवान्?" इति।

"महाराज! भवान् यदा अव्यावहारिकं किमपि सूचयति तदा मम हासः आगच्छति। एतस्य हासस्य कारणं सानुरोधं न प्रष्टव्यं भवता। कारणश्रवणेन भवतः एव खेदः भवेत्। भवन्तं खेदयितुं न इच्छामि अहम्" इति उक्तवान् मन्त्री।

तथापि राजा पुनः पुनः मन्त्रिणम् उक्तवान्– हासस्य कारणं निवेदनीयम् एव इति।

तदा विवशः मन्त्री उक्तवान्– "प्रभो! युवराजः धर्मसेनः मम पुत्र्यां त्रिपुरसुन्दर्याम् अनुरागवान् अस्ति। काऽपि राजकुमारी रूपेण, गुणेन, विद्यया वा तां न अतिशेते।



किन्तु राजकुमारः धर्मसेनः भावयति-यत् भवान् एतं विवाहं न अङ्गीकुर्यात्, काञ्चित् राजकुमारीं परिणेतुम् अनुरोधं कुर्यात् इति। सम्प्रदायस्य अपेक्षया अपि अर्हता श्रेष्ठा इति खलु भवतः आशयः? एवं तर्हि अर्हतायाः आधारेण मम पुत्रीं स्नुषात्वेन अङ्गीकर्तुं सिद्धः वा भवान्?" इति।

मन्त्रिणः वचनस्य श्रवणेन राज्ञः कोपः आगतः। तथापि सः कोपं निगृह्णन् उक्तवान्- "भवतः पुत्र्याः अर्हतायाः निर्णयः भवता न करणीयः। मया खलु परीक्ष्य अर्हता निर्णेतव्या?" इति।

मन्त्री पुनः हसन् मौनं स्थितवान्। राजा पुनरपि हासस्य कारणं वक्तव्यम् इति सानुरोधम् उक्तवान्। तदा मन्त्री उक्तवान्- "पत्नी कीदृशी स्यात् इति निर्णयस्य अधिकारः विवाहेच्छुकस्य एव भवति, न तु तस्य पितुः, अन्यस्य वा। राजकुमारः धर्मसेनः मम पुत्रीम् इच्छति। तत् ज्येष्ठैः अस्माभिः अवश्यम् अङ्गीकरणीयम्। अन्यच्च भवता भावी राज्ञः निर्णयस्य कार्यं मयि निक्षिप्तम्। भाविनं राजानं निश्चेतुम् अर्हः अहं भाविनीं राज्ञीं निश्चेतुं न अर्हामि वा?" इति।

राजा चन्द्रसेनः क्षणकालं चिन्तयित्वा उक्तवान्- "धर्मसेनः त्रिपुरसुन्दर्यां यदि अनुरक्तः स्यात् तर्हि तयोः विवाहविषये अहं चिन्तयिष्यामि। किन्तु सः अन्यः एव विषयः। प्रस्तुतः तु राज्यस्य उत्तराधिकारी भवितुं कस्य अर्हता अस्ति इति निर्णयः। अतः तथा निर्णीय वदतु प्रथमम्" इति।

इदानीम् अपि मन्त्री हसन् मौनं स्थितवान्। तदा राजा पुनः पृष्टवान्- "इतोऽपि मम चित्तशुद्धेः विषये भवतः विश्वासः न जातः? किमर्थं पुनः हसति भवान्?" इति।

"प्रभो! धर्मसेनः यदि मम जामाता स्यात् तर्हि तस्मात् ऋते कं वा अन्यम् अहं राजपदवीप्राप्त्यर्थम् अहं सूचयेयम्?" इति पृष्टवान् मन्त्री।

"भवतः निःस्वार्थबुद्धिः मम अपरिचिता न। निष्पक्षपातं निर्णयं करिष्यति भवान् सदा अपि। अतः ....." इति उक्तवान् राजा

चन्द्रसेनः।

"तर्हि मम निर्णयं शृणोतु तावत्। युवराजः धर्मसेनः मम पुत्र्यां त्रिपुरसुन्दर्याम् अनुरक्तः अस्ति इति बहुपूर्वम् एव ज्ञातं मया। अतः अहं तदारभ्य तस्य व्यवहारादिकं सुसूक्ष्मं परिशीलयन् आसम्। सर्वं परिशील्य एव मया निर्णीतं यत् चतुर्षु राजकुमारेषु धर्मसेनः एव देशस्य उत्तराधिकारी भवितुम् अर्हः इति। एवं निर्णीय एव तयोः विवाहस्य प्रस्तावं भवतः पुरतः उपस्थापितवान्" इति उक्तवान् मन्त्री।

तदा राजा चन्द्रसेनः प्रकटयन् उक्तवान्— "भवतः व्यवहारः एवं पक्षपातपूर्णः भवेत् इति कदापि न निरीक्षितम् आसीत् मया। भवान् स्वार्थभावनया वशीकृतः सन् मम विश्वासं नाशितवान्" इति।

तदा मन्त्री पुनरपि हसित्वा मौनं स्थितवान्।

एतत् दृष्ट्वा राजा कोपेन मन्त्रिणं पृष्टवान्— "एवं पुनः पुनः भवतः हासः मह्यं न रोचते। भवतः आशयः कः इति एकवारम् एव समग्रतया निवेदयतु तावत्" इति।

"प्रभो! भवतः चिन्तनं दृष्टवतः मम हासः आगच्छति। भवान् अर्हतावन्तम् एव उत्तराधिकारिणं कर्तुम् इच्छति। एवं तर्हि केवलं राजकुमाराणां परीक्षा किमर्थम्? देशे अर्हतावन्तः अन्ये न सन्ति इति चिन्तयति वा भवान्? 'राजकुमारः एव सिंहासनस्य उत्तराधिकारी भवेत्। एषः एव सम्प्रदायः' इति अस्ति चेत् ज्येष्ठः एव उत्तराधिकारी



भवेत् इति सम्प्रदायः अपि अनुसरणीयः एव। राजकुमारेषु अन्यतमः एव राजा स्यात् इति यथा भवान् इच्छति तथैव मम भावी जामाता राजा भवतु इति अहम् इच्छामि चेत् कः दोषः? विचित्रं चिन्तनं भवतः। एतत्सर्वं दृष्टवतः मम हासप्रदर्शनं विना का अन्या गतिः?" इति पृष्टवान् मन्त्री।

'प्रबलं कारणं विना परम्परात्यागे आग्रहप्रदर्शनम् अनुचितम्' इति ज्ञातवान् राजा।

सः शान्तः सन् मन्त्रिणं पुनः पृष्टवान्– "मन्त्रिवर्य! भवान् सुस्पष्टं वदतु। धर्मसेनः राजा भवितुं निश्चयेन अर्हति किम्?" इति।

"प्रभोः, यस्य राज्ञः समर्थः मन्त्री, शक्तिशालिनः परिवारजनाः, विश्वास-पात्राणि सेवकाः, अनुगुणा पत्नी, राजभक्तिपराः प्रजाः च भवन्ति तस्य शासनम् उत्तमं भवति एव। एतया दृष्ट्या परम्परापालनदृष्ट्या चापि धर्मसेनः एव राजा भवेत् इति मम अभिप्रायः" इति उक्तवान् मन्त्री।

मन्त्रिणः विचारम् अङ्गीकुर्वन् शिरः चालितवान् राजा। तदा मन्त्री पुनः हसन् उक्तवान्– "प्रभो! इदानीं भवता प्रष्टव्यं नास्ति यत् किमर्थं भवान् हसति इति। भवान् स्वार्थपरः सन् पुत्रं सिंहासने उपवेशयन् अस्ति। अहं स्वार्थपरः सन् मम पुत्रीं युवराज्ञीं कुर्वन् अस्मि। उभयोः अपि स्वार्थः मिलितः इत्यतः पूर्वजैः अनुसृता परम्परा दृढा जाता" इति।

राजा अपि मन्त्रिणा सह हसन् उक्तवान्– "इदानीं प्रमाणितम् अभवत् यत् राजनीतेः अपेक्षया मन्त्रिनीतिः एव श्रेष्ठा इति। भवादृशः नीतिनिपुणः मन्त्री यावत् भवति तावत् एतस्मिन् देशे राज्ञः कोऽपि क्लेशः न भविष्यति" इति।

एतदनन्तरं शुभे मुहूर्ते धर्मसेन-त्रिपुरसुन्दर्योः विवाहः सवैभवं सम्पन्नः। धर्मसेनस्य पट्टाभिषेकः अपि अभवत्।




मधुमक्षिकाणां परिश्रमः
एकं पौण्ड् मधु निर्मातुं मधुमक्षिकाः प्रायः ४०
लक्षात् पुष्पेभ्यः मकरन्दं सङ्गृहणन्ति।


उन्मुखं तरति मीनः
आफ्रिकादेशीयाः कट्फिश् (सिनोडोण्टिस् बटन् सोडा) नामकाः मीनाः उन्मुखं तरन्ति। एवं तरणेन ते
जलस्य उपरिभागे स्थितम् आहारं सुलभतया प्राप्तुं शक्नुवन्ति।


दीर्घौ कर्णौ
सामान्यानां शशानाम् अपेक्षया अपि
रेगिस्तानशशानां कर्णौ दीर्घौ। एतयोः
दीर्घयोः कर्णयोः रक्तनाड्यः अधिकाः भवन्ति।
अतः एते शशाः स्वशरीरम् अधिकं शीतलं यथा स्यात्
तथा रक्षितुं शक्नुवन्ति।

# क्रीडास्पर्धा आसन्ना

| | |
|---|---|
| विवेकः - कुत्र गतः आसीत् भवान्? | Where had you been? |
| श्रीधरः - क्रीडार्थम्। | I had gone out to play games. |
| वि - कुत्र प्रचलति क्रीडा? | Where? |
| श्री - मन्दिरस्य पुरतः विशालः अवकाशः अस्ति खलु। तत्र क्रीडामः। | There is a vast ground opposite the temple. We play there. |
| वि - के के आगच्छन्ति? | Who all gather? |
| श्री - अस्माकं ग्रामतः अहं नञ्जुण्डः च। समीपस्थेभ्यः पञ्चषेभ्यः ग्रामेभ्यः अन्ये केचन आगच्छन्ति। आहत्य दशाधिकाः भवामः। | Nanjunda and I from our village. Others are from five nearby villages. Altogether we are more than ten. |
| वि - सर्वे प्रतिदिनम् आगच्छन्ति वा? | All of them come every day? |
| श्री - प्रायः आगच्छन्ति। अष्ट जनाः तु अवश्यं भवन्ति प्रतिदिनम्। | Mostly yes. At least eight of us will be there every day. |
| वि - काऽपि स्पर्धा आसन्ना वा? | Any competition in the near future? |
| श्री - आं, आगामिमासे मण्डलस्तरे स्पर्धा अस्ति। | Yes. There will be a district-level competition next month. |
| वि - कतमं स्थानं प्राप्नुयुः भवन्तः? | Which place do you expect to achieve? |
| श्री - प्रथमं स्थानम् एव प्राप्तव्यम् इति प्रयत्नः क्रियमाणः अस्ति। गतवर्षे अस्माभिः एव प्रथमं स्थानं प्राप्तम् आसीत्। | We are trying again for the first place. We had won it last year. |
| वि - प्रयत्नः तृप्तिकरः अस्ति वा? | Your efforts are satisfactory, are they? |
| श्री - समीपग्रामवासी निवृत्तः क्रीडापटुः कश्चन प्रतिदिनम् आगत्य प्रशिक्षणं ददाति। अतः चिन्ता नास्ति। | A retired sportsman comes every day from a nearby village. He coaches us. So there is no need to worry. |

# चित्रशीर्षिका-स्पर्धा * पारितोषिकं ५०/- रूप्यकाणि

विजितां शीर्षिकां जुलै-९० मासे प्रकटयिष्यामः।





*उपरितनं चित्रद्वयं पश्यन्तु। *युक्तां शीर्षिकां परस्पर-सम्बन्धि-वाक्यद्वयेन लिखित्वा मे-२० दिनाङ्कतः पूर्वम् एव प्रेषयन्तु। *अनन्तरम् आगताः शीर्षिकाः न परिशीलयिष्यामः। *स्पर्धायां विजेता ५०/- रूप्यकात्मकं पारितोषिकं प्राप्स्यति। *शीर्षिकाः समपत्रे (पोस्ट्-कार्ड्) लेखनीयाः। तत्र अन्यः विषयः न लेखनीयः। *अधोनिर्दिष्ट-सङ्केताय शीर्षिकाः प्रेषणीयाः—

**चन्दमामा (संस्कृतम्)**

**७३/२, 'अक्षरम्' रङ्गरावमार्गः, शङ्करपुरम्, बेङ्गलूरु-५६०००४**

---

**'मार्च्'मासस्य चित्रशीर्षिकास्पर्धायाः परिणामः—**

प्रथमचित्रम् - **प्राचीने शिक्षणविधौ, प्रतीचीनः पाठः।**

द्वितीयचित्रम् - **प्रतीचीनेऽपि सौविध्ये, प्राचीनो दीपः।**

प्रेषकः - श्री कोदण्डरामः, ७, सिंहपेरुमाळ्वीथी(दक्षिणा) वेण्णारतीरम्, तञ्जापुरी-६१३००३


# चन्दमामा

वार्षिकं ग्राहकशुल्कं (भारते) रू. ३६-००

**डाल्टन् एजन्सीस्, चन्दमामा बिल्डिङ्ग्स्, वडपळनी, मद्रास्-६०००२६**

विदेशीय-ग्राहकशुल्क-विवरणार्थं लिखन्तु -

**चन्दमामा पब्लिकेषन्स्, चन्दमामा बिल्डिङ्ग्स्, वडपळनी, मद्रास्-६०००२६**

Printed by B.V. REDDI at Prasad Process Private Ltd., 188 N.S.K. Salai, Madras 600 026 (India) and Published by B. VISHWANATHA REDDI on behalf of CHANDAMAMA PUBLICATIONS, Chandamama Buildings, Vadapalani, Madras 600 026 (India). Controlling Editor: NAGI REDDI.



The stories, articles and designs contained herein are exclusive property of the Publishers and copying or adapting them in any manner will be dealt with according to law.

# कठिनशब्दानां सान्दर्भिकाः अर्थाः

अजस्रा - Constantly
अनुरागः - Affection
अभिप्रयन्ति - Is of the opinion
अमूर्ता - Not well formed
अर्हता - Eligibility
अवगुण्ठनम् - Veil
अव्यावहारिकम् - Not in practice
असन्तृप्तिः - Discontent
आविष्कृतम् - Expressed
उडुपः - Raft
उत्तोलितम् - Hanged
उदयमानः - Rising
कदलीपत्रम् - Banana fruit
कशा - Whip
काष्ठमयी - Wooden
कासारः - Lake
जैत्रयात्रा - Victory expedition
तर्णकः - Calf
दूरदर्शिता - Far-sight
धूमवर्तिका - Cigarette
धूमायमानः - Simmering
पट्टिका - List
परिवेष्टिता - Surrounded
पृष्ठभूमिः - Background
प्रत्युत - Instead of
प्रात्यक्षिकम् - Practical
भिक्षास्यूतः - Square piece of cloth gathered up to the corners
मस्तिष्कम् - Brain
मेषः - Sheep
रूक्षः - Rough
लिहन्ती - Licking
वासना - Recollections of one's earlier birth
विधूननम् - Shaking
शर्करा - Sugar
शिरस्त्रम् - Cap
शुकी - Parrot (F)
सर्वेक्षणम् - Survey
सीवयति - Stitches
सेतुः - Bridge
सैद्धान्तिकम् - Theoretical
स्तम्भः - Pillar
स्वायत्तसंस्था - Private organisation



FIRE ENGINE




SUPER DUMPER

# INTRODUCING

The Sammo range of mechanical toys. Every toy made to exacting standards set by our collaborators — Sammo Corporation of S.Korea, one of the leading toy manufacturers in the world.

Toys crafted to look like the real thing. With dynamic crackling sounds. Glossy, non-fading colours. Exciting colourful packaging which prevents damage and shop soiling.

Smooth edges and non-toxic colours ensure the child's safety.

Indeed, these are toys children will love playing with, toys which parents will love to buy for them.




WRECKER



ZAP GUN

**SAMMO**

In collaboration with Sammo Corporation S.Korea

**CHANDAMAMA TOYTRONIX**

Watch out for more additions to the Sammo Collection

**CHANDAMAMA TOYTRONIX**

**Chandamama Toytronix Pvt Ltd,**
Chandamama Buildings, 188, NSK Salai,
Vadapalani, Madras - 600 026.
Tel: 423423 Telex: 041-25047 DOT IN


Sweet Talk With A Mango-Grove
Parakeet
Hey! Look at my new mango sweet!
Hey! Look at my new mango sweet!
It's got real mango inside, birdy!
It's got real mango inside, birdy!
Sssssshut up now and taste my mango sweet!
Sssssshut up now and taste my mango sweet!
'Ya know what I'm gonna call it...
Aam-Ras
What did ya say?
Aaaaam - Rrrrras. But remember ... golden words are not repeated !
Hi - hi - hi!
nutrine
AAM-RAS
A terrific treat with real mango inside ... in a pack as colourful as a parakeet.
Real Mango In Its Very True Colours
THE FINEST, WIDEST RANGE
nutrine
India's largest selling sweets
Visesh/NC/8940